## १२ त्रिगुप्तयः

विमुक्तकल्पनाजालं, समत्वे सुप्रतिष्ठितम् । आत्मारामं मनस्तज्ज्ञैर्मनोगुप्तिरुदाहृता ॥ १ ॥ यो. प्र. १ श्लो. ४१ प्र.स.
संज्ञादिपरिहारेण, यन्मौनस्यावलम्बनम् । वाग्वृत्तेः संवृतिर्वा या, सा वाग्गुप्तिरिहोच्यते ॥२॥ यो. प्र. १, श्लो. ४२
उपसर्गप्रसङ्गेऽपि, कायोत्सर्गजुषो मुनेः । स्थिरीभावः शरीरस्य, कायगुप्तिर्निगद्यते ॥ ३ ॥
शयनासननिक्षेपाऽऽदानचङ्क्रमणेषु यः । स्थानेषु चेष्टानियमः, कायगुप्तिस्तु साऽपरा ॥४॥ यो. प्र. १, श्लो. ४३, ४४

## १३ अहिंसा

न यत्प्रमादयोगेन, जीवितव्यपरोपणम् । त्रसानां स्थावराणां च, तदहिंसाव्रतं मतम् ॥१॥ त्रि. पर्व १, स. ३, श्लो. ६२२
श्रूयतां धर्मसर्वस्वं, श्रुत्वा चैवावधार्यताम् । आत्मनः प्रतिकूलानि, परेषां न समाचरेत् ॥२॥ यो. द्वि. प्र. श्लो. २०
निरर्थिकां न कुर्वीत, जीवेषु स्थावरेष्वपि । हिंसामहिंसाधर्मज्ञः, काङ्क्षन्मोक्षमुपासकः ॥३॥ यो. द्वि. प्र. श्लोक २१
अमेध्यमध्ये कीटस्य, सुरेन्द्रस्य सुरालये । समाना जीविताकाङ्क्षा, समं मृत्युभयं द्वयोः ॥ ४ ॥ इ. स. श्लोक ३०
मातेव सर्वभूताना-महिंसा हितकारिणी । अहिंसैव हि संसार-मरावमृतसारणिः ॥५॥ यो. द्वि. प्र. श्लोक ५०
अहिंसादुःखदावाग्नि-प्रावृषेण्यघनावली । भवभ्रमिरुगार्त्तांना-महिंसा परमौषधी ॥६॥ यो. द्वि. प्र. श्लोक ५१
सर्वयज्ञेषु यद्दानं, सर्वतीर्थेषु यत् फलम् । सर्वदानफलं वाऽपि, तन्न तुल्यमहिंसया ॥ ७ ॥ य. स. अ. १६ श्लोक ८
दीर्घमायुः परं रूप-मारोग्यं श्लाघनीयता । अहिंसायाः फलं सर्वं, किमन्यत् कामदैव सा ॥८॥ यो. द्वि. प्र. श्लो.५२

न हिंसयति यो जन्तून्, मनोवाक्कायहेतुभिः। जीवितार्थापनयनैः, प्राणिभिर्न स हिंस्यते ॥ ९ ॥

म. शा. पर्व, अ. १७४ श्लोक २७

थूला सुहुमा जीवा संकप्पारंभओ भवे दुविहा। सावराह निरवराह साविक्खा चेव निरविक्खा ॥ १० ॥

शरीरी म्रियतां मा वा ध्रुवं हिंसा प्रमादतः। दयैव यतमानस्य वधेऽपि प्राणिनां क्वचित् ॥११॥ सु. सं. पृ. १६६

अहिंसा सर्वजीवेषु, सर्वज्ञैः परिभाषितम्। इदं हि मूलं धर्मस्य, शेषस्तस्यैव विस्तरः ॥ १२ ॥

यदि ग्रावा तोये तरति तरणिर्यद्युदयति, प्रतीच्यां सप्तार्चिर्यदि भजति शैत्यं कथमपि।
यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः, प्रसूते सत्त्वानां तदपि न वधः क्वापि सुकृतम् ॥ १३ ॥ सिन्दूरप्रकर २६

## १४ दया

धर्मो जीवदयातुल्यो, न क्वापि जगतीतले। तस्मात् सर्वप्रयत्नेन, कार्या जीवदयाऽङ्गिभिः ॥१॥ हेमचन्द्रसूरि

धर्मतत्त्वमिदं ज्ञेयं, भुवनत्रयसंमतम्। यद्दया सर्वभूतेषु, त्रसेषु स्थावरेषु च ॥२॥ पार्श्वनाथ च. सर्ग १ श्लोक ५६२

अहिंसालक्षणो धर्मोऽधर्मश्च प्राणिनां वधः। तस्माद्धर्मार्थिभिर्लोकैः, कर्त्तव्या प्राणिनां दया ॥३॥

म. शा. पर्व अ. ३३, श्लो. ४२

सर्वे वेदा न तत् कुर्युः, सर्वे यज्ञाश्च भारत!। सर्वे तीर्थाभिषेकाश्च, यत् कुर्यात् प्राणिनां दया ॥४॥ म. अ. अ. ११४-१८

न सा दीक्षा न सा भिक्षा, न तद्दानं न तत्तपः। न तद् ध्यानं न तन्मौनं दया यत्र न विद्यते ॥५॥ सू.मु.पृ. १४३ श्लो.१०

सर्वसत्त्वे दयां मैत्रीं, यः करोति सुमानसः। जयत्यसावरीन् सर्वान्, बाह्याभ्यन्तरसंस्थितान् ॥६॥ तत्त्वामृत श्लो. २६३
दयां विना देव-गुरुक्रमार्चास्तपांसि सर्वेन्द्रिययन्त्रणानि ।
दानानि शास्त्राध्ययनानि सर्वं, सैन्यं गतस्वामि यथा वृथैव ॥७॥ उपदेशतरङ्गिणी पृ० २३७
अहिंसापूर्वको धर्मो, यस्मात्सर्वहिते रतः। यूका-मत्कुण-दंशादींस्तस्मात्तानपि रक्षयेत् ॥८॥ जैन पृ. १९१ श्लो. ९४
दयाभूतेषु वैराग्यं विधिवद् गुरुपूजनम् । विशुद्धा शीलवृत्तिश्च पुण्यं पुण्यानुबन्ध्यदः ॥९॥ हरिभद्रीय अष्टकम्

## १५ अभयदानम्

मार्यमाणस्य हेमाद्रिं, राज्यं वाऽथ प्रयच्छतु । तदनिष्टं परित्यज्य, जीवो जीवितुमिच्छति ॥१॥ यो. (प्र. सभा) पृ. ७१
हेम-धेनु-धरादीनां, दातारः सुलभा भुवि । दुर्लभः पुरुषो लोके, यः प्राणिष्वभयप्रदः ॥२॥ मा.पु.स्कन्ध २, अ.७-९३
यो दद्यात् काञ्चनं मेरुं, कृत्स्नां चैव वसुन्धराम् । एकस्य जीवितं दद्यान्न च तुल्यं युधिष्ठिर ! ॥३॥
मा. पु. स्क. ८ अ. ११ श्लोक ५३
यो ददाति सहस्राणि, गवामश्वशतानि च । अभयं सर्वसत्त्वेभ्यस्तद्दानमतिरिच्यते ॥४॥ म. शा. अ. ३०४ श्लोक ५
दत्तमिष्टं तपस्तप्तं, तीर्थसेवा तथा श्रुतम् । सर्वेऽप्यभयदानस्य, कलां नार्हन्ति षोडशीम् ॥ ५॥ मा. पु. अ. ४ श्लो.१९
यो भूतेष्वभयं दद्याद्, भूतेभ्यस्तस्य नो भयम् । यादृग् वितीर्यते दानं, तादृगासाद्यते फलम् ॥६॥ यो. द्वि. प्र. ४८

## १६ हिंसा

पञ्चेन्द्रियाणि त्रिविधं बलं च उच्छ्वासनिःश्वासमथान्यदायुः ।
प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोगीकरणं तु हिंसा ॥ १ ॥ उ. प्रा. स्त. ५ व्या. ६४
आत्मवत्सर्वभूतेषु, सुखदुःखे प्रियाप्रिये । चिन्तयन्नात्मनोऽनिष्टां हिंसामन्यस्य नाचरेत् ॥२॥ यो. द्वि. प्र. श्लो.२०
दमो देव-गुरुपास्ति-र्दानमध्ययनं तपः। सर्वमप्येतदफलं, हिंसां चेन्न परित्यजेत् ॥ ३ ॥ यो. द्वि. प्र. श्लो. ३१
अन्धे तमसि मज्जामः, पशुभिर्ये यजामहे । हिंसा नाम भवेद्धर्मो, न भूतो न भविष्यति ॥ ४ ॥ पू. श्लो. ८३
अनुमन्ता विशसिता, निहन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्ता च, खादकश्चेति घातकाः ॥ ५ ॥ यो. तृ. प्र. श्लो,२१
पङ्गु-कुष्ठि-कुणित्वादि, दृष्ट्वा हिंसाफलं सुधीः। निरागस्त्रसजन्तूनां, हिंसां संकल्पतस्त्यजेत् ॥६॥ त्रि.प.१ स.३ श्लो६२९

## १७ मांसत्यागः

सद्यः संमूर्च्छितानन्तजन्तुसन्तानदूषितम्। नरकाध्वनि पाथेयं, कोऽश्नीयात् पिशितं सुधीः ॥१॥ यो. तृ. प्र. श्लो.३३
मां स भक्षयिताऽमुत्र, यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं, प्रवदन्ति मनीषिणः ॥२॥ म. अ. ५, श्लो. ५५
मांसादनात्प्रणश्यन्ति, देहश्रीः सुमतिः सुखम्। शौचं सत्यं यशः पुण्यं, श्रद्धा-विश्वास-सद्गतिः ॥३॥ हिं. मां. श्लो.१
तिल-सर्षपमात्रं तु, मांसं यो भक्षयेन्नरः । स एव नरकं यति, यावच्चन्द्र-दिवाकरौ ॥४॥ म. शां. अ. १४ श्लो.३१
मांसाशिनश्च दृश्यन्ते, रोगार्त्ता भृशदुर्बलाः। अमांसादा नीरोगाश्च, बलवन्तः सुखान्विताः ॥५॥ इ. स. अ. २७ श्लो.१०

## १८ यज्ञम्

यूपं छित्वा पशून् हत्वा, कृत्वा रूधिरकर्दमान् । यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ॥१॥ म. शा. अ. १० श्लो.११
नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, सन्तुष्टस्तृणभक्षणेन सततं साधो ! न युक्तं तव ।
स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोषि मातृ–पितृभिः पुत्रैस्तथा बान्धवैः ॥२॥
धनपाल काव्य सर्ग० ७ श्लोक १६

सर्वसज्ञान् पशून् कृत्वा ध्यानाग्नावाहुतिं क्षिपेत् । कर्माणि समिधश्चैव, यागोऽयं सुमहाफलः ॥३॥ तत्वा. श्लो. २५७
सत्यं यूपं तपो ह्यग्निः, कर्माणि समिधो मम । अहिंसामाहुतिं दद्याद्, एष यज्ञः सतां मतः ॥४॥ दानचन्द्रि. श्लो. ७९

## १९ सत्यम्

प्रियं पथ्यं वचस्तथ्यं, सूनृतव्रतमुच्यते । तत्तथ्यमपि नो तथ्यमप्रियं चाहितं च यत् ॥१॥ त्रि. सर्ग. ३ श्लो. ६२३
अविसंवादनयोगः, काय–मनो–वागजिह्मता चैव । सत्यं चतुर्विधं तच्च, जिनवरमतेऽस्ति नान्यत्र ॥२॥ प्र. प्र. श्लो.१७४
न सत्यमपि भाषेत, परपीडाकरं वचः । लोकेऽपि श्रूयते यस्मात्, कौशिको नरकं गतः ॥३॥ यो. द्वि. प्र. श्लो. ६१

## २० असत्यम्

कामाल्लोभाद्भयात्क्रोधात्, साक्षि–वादात्तथैव च । मिथ्या वदति यत्पापं, तदसत्यं प्रकीर्तितम् ॥१॥ मा. अ. १ श्लो.३५

अभूतोद्भावनं चाद्यं, द्वितीयं भूतनिह्नवम् । अर्थान्तरं तृतीयं च, गर्हा नाम चतुर्थकम् ॥ २ ॥
एतच्चतुर्विधासत्यं, श्वभ्रादिदुःखहेतुकम् । ज्ञात्वाऽनृतं व्रतं ग्राह्यं, येनास्ति सौख्यवैभवम् ॥३॥ उ० स्त० ६, व्या० ७६
सूक्ष्मबादरभेदाभ्यां, मृषावादं द्विधा स्मृतम् । तीव्रसंकल्पजं स्थूलं, सूक्ष्मं हास्यादिसंभवम् ॥४॥ उ०स्त. ६, व्या० ७५
कन्या–गो–भूम्यलीकानि, न्यासापहरणं तथा । कूटसाक्ष्यं च पञ्चेति, स्थूलासत्यानि संत्यजेत् ॥५॥

त्रि० पर्व १ स० ३ श्लोक ६३१

सर्वलोकविरुद्धं यद्, यद् विश्वसितघातकम् । यद्विपक्षश्च पुण्यस्य, न वदेत् तदसूनृतम् ॥६॥ यो० द्वि० प्र० श्लो० ५५
एकत्रासत्यजं पापं, पापं निःशेषमन्यतः । द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥७॥ यो. द्वि० प्र० श्लोक ६४
धर्महानिरविश्वासो, देहार्थव्यसनं तथा । असत्यभाषिणां निन्दा, दुर्गतिश्चोपजायते ॥८॥ उ० सू० प्र० अ० २४
असत्यवक्तुर्भुवि पक्षपातं, कुर्यान्न विद्वान् किल सङ्कटेऽपि ।
तेन ध्रुवं हि वसुराजवत्स, इहापवादं नरकं परत्र ॥ १४ ॥ हिंगुल प्रक० मृषावादप्रक्रम श्लोक ४

## २१ उत्सूत्रवचनम्

अविहिकया वरमकयं, उस्सुयवयणं वयंति सव्वण्णू । जम्हा पायच्छित्तं, अकए गुरुअं कए लहुअं ॥ १ ॥
आणाभंगं दट्ठुं मज्झत्था ठिंति जे तुसिणिआ य । अविहिअणुमोयणाए तेसिंपि य होइ वयलोवो ॥२॥ सु० पृ० २४३

## २२ अचौर्यम्

अनादानमदत्तस्यास्तेयव्रतमुदीरितम् । बाह्यप्राणा नृणामर्थो, हरता तं हता हि ते ॥१॥ त्रि० पर्व १०, स. ३ श्लो. ६२४
परार्थग्रहणे येषां, नियमः शुद्धचेतसाम् । अभ्यायान्ति श्रियस्तेषां, स्वयमेव स्वयंवराः ॥२॥ यो० द्वि० प्र. श्लो. ७४

## २३ चौर्यम्

तदाद्यं स्वामिनाऽदत्तं, जीवादत्तं तथाऽपरम् । तृतीयं तु जिनादत्तं, गुर्वदत्तं, तुरीयकम् ॥१॥ उ. प्रा. भा. २ पृ. १७०
पतितं विस्मृतं नष्टं, स्थितं स्थापितमाहितम् । अदत्तं माददीत स्वं, परकीयं क्वचित्सुधीः ॥२॥ यो० द्वि० प्र० श्लो० ६६
अयं लोकः परलोको, धर्मो धैर्यं धृतिर्मतिः। मुष्णता परकीयं स्वं, मुषितं सर्वमप्यदः ॥३॥ योगशास्त्र द्वि. श्लोक ६७
एकस्यैकं क्षणं दुःखं, मार्यमाणस्य जायते । सपुत्र-पौत्रस्य पुनर्यावज्जीवं हृते धने ॥४॥ योगशास्त्र द्वि. श्लो० ६८
दौर्भाग्यं प्रेष्यतां दास्यमङ्गच्छेदं दरिद्रताम् । अदत्तात्तफलं ज्ञात्वा, स्थूलस्तेयं विवर्जयेत् ॥५॥ त्रि. पर्व १ सर्ग ३ श्लो० ६३२

## २४ ब्रह्मचर्यम्

दिव्यौदारिककामानां, कृतानुमतिकारितैः। मनोवाक्कायतस्त्यागो, ब्रह्माष्टादशधा मतम् ॥१॥ योगशास्त्र प्र. श्लो० २३
दिव्यात्कामरतिसुखात्, त्रिविधं त्रिविधेन विरतिरिति नवकम् ।
औदारिकादपि तथा, तद् ब्रह्माष्टादशविकल्पम् ॥ २ ॥ प्रशमरति प्रकरण श्लोक १७७
संतोषः स्वेषु दारेषु, त्यागश्चापरयोषिताम् । प्रथयन्ति गृहस्थानां, चतुर्थं तदणुव्रतम् ॥५॥ उपदेश प्रा० भा० १ पृ० १८०

मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत् । बलवानिन्द्रियग्रामो, विद्वांसमपि कर्षति ॥६॥ मनु० अ० २, श्लो० ११
कुण्डले नाभिजानामि, नाभिजानामि कङ्कणे । नूपुरे त्वभिजानामि, नित्यं पादाब्जवन्दनात् ॥७॥ पद्मपुराण०
स्नानमुद्वर्तनाभ्यङ्गं, नख-केशादिसत्क्रियाम् । गन्ध-माल्यं प्रदीपं च, त्यजन्ति ब्रह्मचारिणः ॥८॥ श्रा० वृ० पृ० ३
यः स्वदारेषु सन्तुष्टः, परदारपराङ्मुखः । स गृही ब्रह्मचारित्वाद्, यतिकल्पः प्रकल्पते ॥९॥ कुमारपाल पत्र ८४
एकरात्र्युषितस्यापि, या गतिर्ब्रह्मचारिणः । न सा क्रतुसहस्रेण, वक्तुं शक्या युधिष्ठिर ! ॥१०॥ योगवासिष्ठ श्लो. २९
प्राणभूतं चरित्रस्य, परब्रह्मैककारणम् । समाचरन् ब्रह्मचर्यं, पूजितैरपि पूज्यते ॥११॥ योगशास्त्र द्वि. श्लोक १०४
चिरायुषः सुसंस्थानाः, दृढसंहनना नराः । तेजस्विनो महावीर्याः, भवेयुर्ब्रह्मचर्यतः ॥१२॥ योगशास्त्र द्वि. श्लो० १०५
देवदाणवगन्धव्वा जक्खरक्खसकिन्नरा । बम्भयारिं नमंसन्ति दुक्करं जे करन्ति तं ॥ १३ ॥ उ० पो० गा० १६

## २५ अब्रह्मचर्य-(मैथुनम्)

योनियन्त्रसमुत्पन्नाः, सुसूक्ष्मा जन्तुराशयः । पीड्यमाना विपद्यन्ते, यत्र तन्मैथुनं त्यजेत् ॥१॥ योगशास्त्र द्वि.श्लो० ७९
रम्यमापातमात्रे यत्, परिणामेऽतिदारुणम् । किंपाकफलसंकाशं, तत् कः सेवेत मैथुनम् ॥२॥ त्रि० पर्व स. ३ श्लो. ७७
कम्पः स्वेदः श्रमो मूर्च्छा, भ्रमिर्ग्लानिर्बलक्षयः । राजयक्ष्मादिरोगाश्च, भवेयुर्मैथुनोत्थिताः ॥३॥
त्रि० पर्व १, सर्ग ३, श्लोक ७८
मेहुणसन्नारूढो, नवलक्खं हणेइ सुहुमजीवाणं । तित्थयरेणं भणियं, सद्दहियव्वं पयत्तेणं ॥ ४ ॥

सयसहस्साण नारीणं, पिट्टं फाडेइ निग्घिणा। सत्तठमासिए गब्भे, तप्फडंते निकत्तइ ॥ ५ ॥
तं तस्स जत्तियं पावं, तं नवगुणियमेलियं हुज्ञा। एगित्थियजोगेणं, साहू बंधिज मेहुणओ ॥६॥ संबोधसित्तरि
न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव, भूय एवाभिवर्धते ॥७॥ म. अ० २ श्लो० ९८
असंयमकृतोत्सेकान्, विषयान् विषसंनिभान्। निराकुर्यादखण्डेन, संयमेन महामतिः ॥८॥ यो. द्वि. प्र. श्लो० ८३
उपवासोऽवमौदर्यं, रसानां त्यजनं तथा। स्नानस्यासेवनं चैव, ताम्बूलस्य च वर्जनम् ॥ ९ ॥
असेवेच्छानिरोधस्तु, ज्ञानस्य स्मरणं तथा। एते हि निर्जरोपायाः, मदनस्य महारिपोः ॥ १० ॥ त. श्लो० ११६ ११७
दिवा पश्यति नो घूकः, काको नक्तं न पश्यति। अपूर्वः कोऽपि कामन्धो, दिवानक्तं न पश्यति ॥११॥ उ.भा. पृ.६३
विषस्य विषयाणां च पश्यतां महदन्तरम्। उपभुक्तं विषं हन्ति, विषयाः स्मरणादपि ॥ १२ ॥ उ. प्रा. स्तम्भ ७ व्या.८९
ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते। सङ्गात् संजायते कामः, कामात्क्रोधोऽभिजायते ॥ १३ ॥
क्रोधाद्भवति संमोहः, संमोहात् स्मृतिविभ्रमः। स्मृतिभ्रंशाद्बुद्धिनाशो, बुद्धिनाशात्प्रणश्यति ॥१४॥ भ.अ० २ श्लो.६२-६३

## २६ परिग्रहम्

अध्यात्मविदो मूर्च्छां, परिग्रहं वर्णयन्ति निश्चयतः। तस्माद्वैराग्येप्सोराकिञ्चन्यं परो धर्मः ॥ १ ॥ प्र० प्र० श्लो. १७८
संसारमूलमारम्भास्तेषां हेतुः परिग्रहः। तस्मादुपासकः कुर्यादल्पमल्पं परिग्रहे ॥२॥ यो० द्वि० प्र० श्लो० ११०
असंतोषमविश्वासमारम्भं दुःखकारणम्। मत्वा मूर्च्छाफलं कुर्यात्, परिग्रहनियन्त्रणम् ॥३॥ त्रि. पर्व १ सर्ग ३ श्लो. ६३४

सङ्गाद् भवन्त्यसन्तोऽपि रागद्वेषादयो द्विषः । मुनेरपि चलेच्चेतो यत् तेनान्दोलितात्मनः ॥४॥ यो० द्वि० प्र. श्लो. १०९

धर्मार्थं यस्य वित्तेहा, तस्यानीहा गरीयसी । प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥५॥ पराशरस्मृति श्लो. २३३

परिग्रहार्थमारम्भमसंतोषाद्वितन्वते । संसारवृद्धिस्तेनैव, गृह्णीत तदिदं व्रतम् ॥६॥ उ० भा० अ० व्या० १०९

दोससयमूलजालं, पुव्वरिसिविवज्जियं जइ यं तं । अत्थं वहसि अणत्थं कीस अणत्थं तव चरसि ॥ ७ ॥

संग्रहे साग्रहाः सन्ति, कीटाद्या अपि कोटिशः । दानेऽतिविदुराः प्रायो देवा अपि न केचन ॥८॥ सु० पृ० १६८

मूर्च्छाछन्नधियां सर्वं जगदेव परिग्रहः । मूर्च्छया रहितानां तु, जगदेवापरिग्रहः ॥९॥ ज्ञा० प० श्लोक ८

चित्तेऽन्तर्ग्रंथगहने बहिर्निर्ग्रंथता वृथा । त्यागात् कंचुकमात्रस्य, भुजङ्गो नहि निर्विषः ॥१०॥ ज्ञा० प० श्लो. ४

## २७ पञ्चमहाव्रतभावनाः

मनोगुप्त्येषणादेर्याभिः समितिभिः सदा । दृष्टान्नपानग्रहणेनाऽहिंसां भावयेत्सुधीः ॥ १ ॥

हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् । आलोच्य भाषणेनापि, भावयेत् सुनृतं व्रतम् ॥ २ ॥

आलोच्यावग्रहं याच्ञाऽभीक्ष्णावग्रहयाचनम् । एतावन्मात्रमेवैतदित्यवग्रहधारणम् ॥ ३ ॥

समानधार्मिकेभ्यश्च तथावग्रहयाचनम् । अनुज्ञापितपानान्नासनमस्तेयभावना ॥ ४ ॥

स्त्रीषण्ढपशुमद्वेश्मासनकुड्यान्तरोज्झनात् । सरागस्त्रीकथात्यागात् प्राग्रतस्मृतिवर्जनात् ॥ ५ ॥

स्त्रीरम्याङ्गेक्षणस्वाङ्ग संस्कारपरिवर्जनात् । प्रणीतात्यशनत्यागाद्ब्रह्मचर्यं तु भावयेत् ॥ ६ ॥

स्पर्शे रसे च गन्धे च रूपे शब्दे च हारिणि । पञ्चस्वपि हीन्द्रियार्थेषु, गाढं गार्द्ध्यस्य वर्जनम् ॥ ७ ॥
एतेष्वेवाऽमनोज्ञेषु सर्वथा द्वेषवर्जनम् । आकिञ्चन्यव्रतस्यैवं भावनाः पञ्च कीर्तिताः ॥८॥ हैमीययोगशास्त्रात्

## २८ रात्रिभोजनम्

हिंस्यन्ते प्राणिनः सूक्ष्मा, यत्राशुच्यभिभक्ष्यते । तद्रात्रिभोजनं संतो, न कुर्वन्ति दयापराः ॥ १ ॥ सु, श्लो० ७६६
अस्तंगते दिवानाथे, आपो रुधिरमुच्यते । अन्नमांससमं प्रोक्तं, मार्कण्डेन महर्षिणा ॥२॥ मा० अ० ३४ श्लो० ५३
वासरे च रजन्यां च, यः खादन्नेव तिष्ठति । शृङ्गपुच्छपरिभ्रष्टः, स्पष्टं स पशुरेव हि ॥३॥ यो० तृ० प्र० श्लो० ६२
कण्डको दारुखण्डं च, वितनोति गलव्यथाम् । व्यञ्जनान्तर्निपतितस्तालु विध्यति वृश्चिकः ॥४॥ यो० प्र० ३ श्लो० ५१
मेधां पिपीलिका हन्ति, यूका कुर्याज्जलोदरम् । कुरुते मक्षिका वान्तिं, कुष्ठरोगं च कोलिकः॥५॥ यो० प्र० ३ श्लो. ५०
विलग्नस्तु गले वालः, स्वरभङ्गाय जायते । इत्यादयो दृष्टदोषाः, सर्वेषां निशि भोजने ॥ ६ ॥ यो० प्र० लो० ५२
उलूककाकमार्जारगृध्रशम्बरशूकराः । अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात् ॥७॥ म० ज्ञा०अ० ७० श्लो० २०३

## २९ अशुभध्यानम्

प्रमत्तश्चेन्द्रियार्थेषु, गृद्धो धर्मपराङ्मुखः । जिनोक्तमपुरस्कुर्वन्नार्तध्याने प्रवर्तते ॥ १ ॥ अ० प्र० ५ श्लो० ९२
राज्योपभोगशयनासनवाहनेषु, स्त्रीगन्धमाल्यमणिरत्नविभूषणेषु ।
इच्छाभिलाषमतिमात्रमुपैति मोहात्, ध्यानं तदार्त्तमिति तत् प्रवदन्ति तज्ज्ञाः ॥ २ ॥

संछेदनैर्दहनभञ्जनमारणैश्च, बन्धप्रहारदमनैर्विनिकृन्तनैश्च ।
यो याति रागमुपयाति च नानुकम्पां, ध्यानं तु रौद्रमिति तत्प्रवदन्ति तज्ज्ञाः ॥ ३ ॥

## ३० धर्मध्यानम्

सूत्रार्थसाधनमहाव्रतधारणेषु, बन्धप्रमोक्षगमनागमहेतुचिन्ता ।
पञ्चेन्द्रियव्युपरमश्च दया च भूते, ध्यानं तु धर्ममिति तत्प्रवदन्ति तज्ज्ञाः ॥ १ ॥ योगतारा० पृ० १६, श्लो०,७४
धर्मध्याने भवेद् भावः, क्षायोपशमिकादिकः। लेश्याः क्रमविशुद्धा स्युः, पीतपद्मसिताः पुनः ॥२॥ यो. प्र. १०, श्लो.१६
आज्ञाऽपायविपाकानां, संस्थानस्य च चिन्तनात्। इत्थं वा ध्येयभेदेन, धर्म्यं ध्यानं चतुर्विधम् ॥३॥ यो. प्र. १० श्लो.७
आज्ञां यत्र पुरस्कृत्य, सर्वज्ञानामबाधिताम् । तत्त्वतश्चिन्तयेदर्थांस्तदाज्ञाध्यानमुच्यते ॥ ४ ॥ यो० प्र० १० श्लो. ८
रागद्वेषकषायाद्यैर्जायमानान् विचिन्तयेत्। यत्रापायांस्तदपायविचयध्यानमिष्यते ॥५॥ यो० प्र० १० श्लो० १०
प्रतिक्षणसमुद्भूतो यत्र कर्मफलोदयः । चिन्त्यते चित्ररूपः स, विपाकविचयो मतः ॥६॥ यो० प्र० १० श्लो. १२
अनाद्यन्तस्य लोकस्य, स्थित्युत्पत्तिव्ययात्मनः। आकृतिं चिन्तयेद् यत्र, संस्थानविचयः स तु ॥७॥ यो. प्र.१० श्लो १४
इन्द्रियैः सममाकृष्य, विषयेभ्यः प्रशान्तधीः । धर्मध्यानकृते तस्मान्मनः कुर्वीत निश्चलम् ॥८॥ यो० पृ. ३६६ श्लो० ६

## ३१ वीतरागसुखम्

भोगसुखैः किमनित्यैर्भयबहुलैः काङ्क्षितैः परायत्तैः । नित्यमभयमात्मस्थं प्रशमसुखं तत्र यतितव्यम् ॥ १ ॥

यत्सर्वविषयकाङ्क्षोद्भवं सुखं प्राप्यते सरागेण। तदनन्तकोटीगुणितं मुधैव लभते विगतरागः ॥ २ ॥
सम्यग्दृष्टिर्ज्ञानी ध्यानतपोबलयुतोऽप्यनुपशान्तः। तं लभते न गुणं यं प्रशमगुणमुपासितो लभते ॥ ३ ॥
नैवास्ति राजराजस्य, तत्सुखं नैव देवराजस्य। यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥ ४ ॥ प्रशमरतिप्रकरणात्

## ३२ मोक्षसाधनानि

देवो दलितरागारिः, गुरुस्त्यक्तपरिग्रहः। धर्मः प्रगुणकारुण्यो, मुक्तिमूलमिदं मतम् ॥ १ ॥ सू. पृ० ४७ श्लो. ४९२
निर्ममत्वं विरागाय, वैराग्याद्योगसङ्गतिः। योगात्सञ्जायते ज्ञानं, ज्ञानान्मुक्तिः प्रजायते ॥ २ ॥
शुद्धस्फटिकसङ्काशो, निष्कलश्चात्मनाऽऽत्मनि। परमात्मेति स ज्ञातः, प्रदत्ते परं पदम् ॥३॥ यो. प्र. १ श्लो० ४
सम्यग्विरक्तिर्ननु यस्य चित्ते, सम्यग्गुरुर्यस्य च तत्त्ववेत्ता। सदाऽनुभूत्या दृढनिश्चयो यस्तस्यैव सिद्धिर्न हि चापरस्य॥४॥
हृदयप्रदीप पृ० २०५ श्लो० ४

अयमात्मैव संसारः, कषायेन्द्रियनिर्जितः। तमेव तद्विजेतारं, मोक्षमाहुर्मनीषिणः ॥ ५ ॥ यो.पृ० २७९ श्लो० ५
न ज्ञानं केवलं मुक्त्यै, न क्रिया केवला भवेत्। संयोगादुभयोः सम्यग् मुक्तिर्माहुर्मनीषिणः ॥ ६ ॥ ध. पृ० २३
नैतद्भुतं भवति वा, भविष्यति न जातुचित्। यदर्हन्तोऽन्यसाहाय्यादर्जयन्ति हि केवलम् ॥ ७ ॥
केवलं केवलज्ञानं, प्राप्नुवन्ति स्ववीर्यतः। स्ववीर्येणैव गच्छन्ति, जिनेन्द्राः परमं पदम् ॥८॥ म. स. ३ श्लो.३० ३१
नाणं च दंसणं चेव चरित्तं च तवो तहा। एस मग्गुत्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ ९ ॥ उ. अ. श्लो. २

णादंसणिस्स नाणं नाणेन विणा न हुंति चरणगुणा। अगुणिस्स नत्थि मुक्खो, नत्थि अम्मुक्खस्स निव्वाणं ॥ १० ॥
नाणेण जाणई भावे, सम्मत्तेण य सद्दहे। चरित्तेण निगिण्हाई, तवेण परिसुज्झई ॥११॥ उ. अ. २८, श्लो. ३० ३५

## ३३ श्रावक धर्म

जिनो देवः कृपा धर्मो गुरवो यत्र साधवः। श्रावकत्वाय कस्तस्मै न श्लाघेताऽमूढधीः ॥ १ ॥ यो. श्लो. १४०
सावद्ययोगविरतिश्चारित्रं मुक्तिकारणम्। सर्वात्मना यतीन्द्राणां देशतः स्यादगारिणाम् ॥ २ ॥ (योगशास्त्र)
देशचारित्रविरतो विरतानामुपासकः। भवस्वरुपं जानानः श्रावको जीवितावधिः ॥ ३ ॥
श्रद्धालुतां श्राति जिनेन्द्रशासने, धनानि क्षेत्रेषु वपत्यानारतम्।
करोति पुण्यानि सुसाधुसेवनादतोऽ—पि तं श्रावकमाहुरुत्तमाः ॥ ४ ॥ सूक्तमुक्तावली पृ० ४५
देवपूजा गुरुपास्तिः स्वाध्यायः संयमस्तपः। दानं चेति गृहस्थानां षट् कर्माणि दिने दिने ॥९॥ सूक्तमुक्तावली
स्थूलवधानृतचौर्यपरस्त्रीरत्यरतिवर्जितः सततम् दिग्व्रतमूर्ध्वं—(मिह १) देशावकाशिकमनर्थविरतिं च ॥ १० ॥
सामायिकं च कृत्वा पौषधमुपभोगपारिमाणं च। न्यायागतं च कल्प्यं विधिवत्पात्रेषु विनियोज्यम् ॥ ११ ॥
चैत्यायतनप्रस्थापनानि च कृत्वा शक्तितः प्रयतः। पूजाश्च गन्धमाल्याधिवासधूपप्रदीपाद्याः ॥ १२ ॥
प्रशमरतिनित्यतृषितो जिनगुरुसाधुजनवन्दनाभिरतः। संलेखनां च काले योगेनाराध्य सुविशुद्धाम् ॥ १३ ॥
सद्भिर्गुणदोषज्ञैर्दोषानुत्सृज्य गुणलवा ग्राह्याः। सर्वात्मना च सततं प्रशमसुखायैव यतितव्यम् ॥१४॥ प्रशमरतिप्रकरणात्

## ३४ दिशापरिमाणम्

दशस्वपि कृता दिक्षु, यत्र सीमा न लङ्घ्यते । ख्यातं दिग्विरतिरिति, प्रथमं तद् गुणव्रतम् ॥१॥ यो. तृ. प्र. श्लो.१
जगदाक्रममाणस्य, प्रसरल्लोभवारिधेः । स्खलनं विदधे तेन, येन दिग्विरतिः कृता ॥ २ ॥ यो. तृ. प्र. श्लो. ३
चराचराणां जीवानां, विमर्दननिवर्तनात् । तप्तायोगोलकल्पस्य, सद्व्रतं गृहिणोऽप्यदः ॥ ३ ॥ यो. तृ. प्र. श्लो. २

## ३५ भोगोपभोगविरमणम्

भोगोपभोगयोः संख्या, शक्त्या यत्र विधीयते । भोगोपभोगमानं तद्, द्वैतीयिकं गुणव्रतम् ॥१॥ यो.शा.पृ.१५७श्लो.४
सकृदेव भुज्यते यः, स भोगोऽन्नस्रगादिकः । पुनः पुनः पुनर्भोग्य, उपभोगोऽङ्गनादिकः ॥ २ ॥

## ३६ अभक्ष्यत्यागः

अनन्तकायसन्धाने बहु बीजं चाभक्ष्यकम् । आमगोरसमिश्रं च, द्विदलं सूक्ष्मसत्त्वजम् ॥ उ. प्रा. भा. २ पृ. ५१
तुच्छफलं च वन्ताकं, रसेन चलितं तथा । अज्ञातफलमेतानि, ह्यभक्षाणि द्वाविंशतिः ॥ २ ॥ उ. प्रा. भा.२ पृ.५२
रसैश्चलितं निःस्वादं द्व्यक्षणां योनिस्थानकम् । पर्युषितं कुत्सितान्नं भक्षणाद्दुःखमासदेत् ॥ ३ ॥ उ. प्रा. भा.२ पृ.५३
मद्यं मांसं नवनीतं मधूदुम्बरपञ्चकम् । अनन्तकायमज्ञातफलं. रात्रौ च भोजनम् ॥ ४ ॥ यो. तृ. प्र. श्लो. ६
आमगोरससम्पृक्तं द्विदलं पुष्पितोदनम् । दध्यहर्द्वितयातीतं, कुथितान्नं च वर्जयेत् ॥ ५ ॥ यो. तृ. प्र. श्लो. ७

## ३७ पञ्चदशकर्मादानानि

अंगार-वन-शकट-भाटक-स्फोटक जीविका । दन्त-लाक्षा-रस-केश-विषवाणिज्यकानि च ॥ १ ॥
यन्त्रपीडा निर्लाञ्छनमसतीपोषणं तथा । दवदानं सरःशोष इति पञ्चदश त्यजेत् ॥ २ ॥ उ. स्तम्भ.९ व्या. १२३

## ३८ अनर्थदंडव्रतम्

शरीराद्यर्थदण्डस्य, प्रतिपक्षतया स्थितः । योऽनर्थदण्डस्तत्त्यागस्तृतीयं तु गुणव्रतम् ॥ १ ॥ उ. मा. स्त.९ व्या० १३१
आर्त्तं रौद्रमपध्यानं, पापाकर्मोपदेशिता । हिंसोपकारिदानं च, प्रमादाचरणं तथा ॥ २ ॥ यो. तृ. प्र. श्लो. ७३
संयुक्ताधिकरणत्व-मुपभोगातिरिक्तता । मौखर्यमथ कौकुच्यं, कंदर्पोऽनर्थदण्डगाः ॥३॥ उ. प्रा. स्त. १० व्या० १३६

## ३९ सामायिकव्रतम्

त्यक्तार्त्तरौद्रध्यानस्य, त्यक्तसावद्यकर्मणः । मुहूर्तं समता या तां, विदुः सामायिकव्रतम् ॥ १ ॥ यो. तृ. प्र. श्लो.८२
समता सर्वभूतेषु, संयमः शुभभावना । आर्त्तरौद्रपरित्याग-स्तद्धि सामायिकं व्रतम् ॥ २ ॥ अष्टाह्निका
सामायिकं स्यात् त्रैविध्यं, सम्यक्त्वं च श्रुतं तथा। चारित्रं तृतीयं तच्च, गृहिकमनगारिकम् ॥ ३ ॥ उ.स्त.१० व्या.१४०
कायवाङ्मनसां दुष्ट-प्रणिधानमनादरः। स्मृत्यनुपस्थापनं च, स्मृताः सामायिकव्रते ॥ ४ ॥ यो. पृ. २०१ श्लो.११६
कर्म जीवं च संश्लिष्टं, परिज्ञातात्मनिश्चयः । विभिन्नीकुरुते साधुः, सामायिकशलाकया ॥ ५ ॥ यो. पृ. ६ श्लो.५२

## ३७ पञ्चदशकर्मादानानि

अंगार-वन-शकट-भाटक-स्फोटक जीविका । दन्त-लाक्षा-रस-केश-विषवाणिज्यकानि च ॥ १ ॥
यन्त्रपीडा निर्लाञ्छनमसतीपोषणं तथा । दवदानं सरःशोष इति पञ्चदश त्यजेत् ॥ २ ॥ उ. स्तम्भ.९ व्या. १२३

## ३८ अनर्थदंडव्रतम्

शरीराद्यर्थदण्डस्य, प्रतिपक्षतया स्थितः । योऽनर्थदण्डस्तत्त्यागस्तृतीयं तु गुणव्रतम् ॥ १ ॥ उ. प्रा. स्त.९ व्या० १३१
आर्त्तं रौद्रमपध्यानं, पापाकर्मोपदेशिता । हिंसोपकारिदानं च, प्रमादाचरणं तथा ॥ २ ॥ यो. तृ. प्र. श्लो. ७३
संयुक्ताधिकरणत्व-मुपभोगातिरिक्तता । मौखर्यमथ कौकुच्यं, कंदर्पोऽनर्थदण्डगाः ॥३॥ उ. प्रा. स्त. १० व्या० १३६

## ३९ सामायिकव्रतम्

त्यक्तार्त्तरौद्रध्यानस्य, त्यक्तसावद्यकर्मणः । मुहूर्तं समता या तां, विदुः सामायिकव्रतम् ॥ १ ॥ यो. तृ. प्र. श्लो.८२
समता सर्वभूतेषु, संयमः शुभभावना । आर्त्तरौद्रपरित्याग-स्तद्धि सामायिकं व्रतम् ॥ २ ॥ अष्टाह्निका
सामायिकं स्यात् त्रैविध्यं, सम्यक्त्वं च श्रुतं तथा । चारित्रं तृतीयं तच्च, गृहिकमनगारिकम् ॥ ३ ॥ उ.स्त.१० व्या.१४०
कायवाङ्मनसां दुष्टप्रणिधानमनादरः। स्मृत्यनुपस्थापनं च, स्मृताः सामायिकव्रते ॥ ४ ॥ यो. पृ. २०१ श्लो.११६
कर्म जीवं च संश्लिष्टं, परिज्ञातात्मनिश्चयः । विभिन्नीकुरुते साधुः, सामायिकशलाकया ॥ ५ ॥ यो. पृ. ६ श्लो.५२

कषायविषयाहार-स्त्यागो यत्र विधीयते । उपवासः स विज्ञेयः, शेषं लङ्घनकं विदुः ॥ २ ॥
उपावृत्तस्य पापेभ्यो, यस्तु वासो गुणैः सह । उपवास स विज्ञेयः, सर्वभोगविवर्जितः ॥ ३ ॥ मा, श्लो. १७
कर्मेन्धनं यदज्ञानात् संचितं जन्मकानने । उपवासशिखी सर्वं, तद्भस्मीकुरुते क्षणात् ॥ ४ ॥ सु. श्लो. ८११

## ४३ पर्वतिथिः

शुभायुःकर्मबन्धाय, पर्वपालनमङ्गिनाम् । तेन सद्ध्यानदानादि-विषये स्थापयेन्मनः ॥ १ ॥ उ. प. १० श्लो. २१
अष्टमी कर्मघाताय, सिद्धिलाभा चतुर्दशीः। पञ्चमी केवलज्ञाना, तस्मात्त्रितयमाचरेत् ॥ २ ॥ मौ. श्लो. ८९
द्वितीया पञ्चम्यष्टम्येकादशी चतुर्दशी पञ्च तिथयः । एताः श्रुततिथयो गौतमगणधरेण भणिताः ॥ ३ ॥
द्वितीया द्विविधे धर्मे, पञ्चमी ज्ञाने चाष्टमी कर्मणि। एकादश्यङ्गानां चतुर्दशी चतुर्दशपूर्वाणाम्॥ ४॥ सु.पृ.१० श्लो.१-२

## ४४ पर्वाराधनम्

सामायिकावश्यकपौषधानि, देवार्चनस्नानविलेपनानि । ब्रह्मक्रियादानदयामुखानि, भव्याश्चतुर्मासकमण्डनानि ॥ १ ॥
सूक्तमुक्तावलि पृ० १० श्लो. ५
व्याख्यानश्रवणं जिनालयगतिर्नित्यं गुरोर्वन्दनम्, प्रत्याख्यानविधानमागमगिरां चित्ते चिरं स्थापनम् ।
कल्पाकर्णनमात्मशक्तितपसा संवत्सराराधनं, श्राद्धैः श्लाघ्यतपोधनादिति फलं लभ्यं चतुर्मासके ॥ २॥ सू. पृ.१० श्लो. ६

तप्येद्वर्षशतैर्यैश्च एकापादस्थितो नरः । एकेन ध्यानयोगेन, कलां नार्हति षोडशीम् ॥ ६ ॥ उ. भा. २ पृ. १०१
रागादिध्वान्तविध्वंसे, कृते सामायिकांशुना । स्वस्मिन् स्वरूपं पश्यन्ति, योगिनः परमात्मनः ॥७॥ यो.पृ.२९५ श्लो.५३
सामायिकव्रतस्थस्य गृहिणोऽपि स्थिरात्मनः । चन्द्रावतंसकस्येव, क्षीयते कर्म संचितम् ॥ ८ ॥ यो. तृ. प्र. श्लो.८३
दिवसे दिवसे लक्खं, देइ सुवण्णस्स खंडियं एगो । एगो पुण सामाइयं, करेइ न पहुप्पए तस्स ॥९॥ संबोधसित्तरी

## ४० देशावगाशिकं

दिग्व्रते परिमाणं यत्, तस्य संक्षेपणं पुनः । दिने रात्रौ च देशाव-काशिकव्रतमुच्यते ॥ १ ॥ यो. तृ. प्र. श्लो. ८४
प्रेष्यप्रयोगानयनं, पुद्गलक्षेपणं तथा । शब्दरूपानुपातौ च, व्रते देशावकाशिके ॥२ ॥ उ. भा. स्त. १० व्या. १४६

## ४१ पौषधव्रतम्

चतुष्पर्व्यां चतुर्थादि-कुव्यापारनिषेधनम् । ब्रह्मचर्य क्रियास्नाना-दित्यागः पौषधव्रतम् ॥ १ ॥ यो. तृ. पृ. श्लो. ८५
पोषं धर्मस्य धत्ते यत्, तद्भवेत् पौषधव्रतम् । तच्चतुर्धा समाख्यात-माहारपौषधादिकम् ॥ २॥ उ. भा. २ पृ. ११६
अहोरात्रदिवारात्रि-भेदात् त्रेधा च पौषधः । तत्र चत्वारि कार्याणि, विचार्याणि विचक्षणैः ॥ ३ ॥ उ. प. १० श्लो.२८
चतुर्थादि तपः पाप-व्यापारपरिवर्जनम् । ब्रह्मचर्यं परित्यागः, शरीरसंस्कृतेरपि ॥ ४ ॥ उ. प. १० श्लो. २९

## ४२ उपवासः

त्यक्तभोगोपभोगस्य, सर्वारम्भविमोचिनः । चतुर्विधाशनत्याग, उपवासो मतो जिनैः ॥ १ ॥ सु. श्लो. ८०९

गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः, संमीलने नयनयोर्न हि किञ्चिदस्ति ॥ ७ ॥ वै. श्लो. ४३

अनित्यं यौवनं रूपं, जीवितं द्रव्यसंचयः । आरोग्यं प्रियसंवासो, गृध्येत्तत्र न पण्डितः ॥८॥ म. शा. अ.२०३ श्लो.४

इन्द्रचापसमा भोगाः, संपदो जलदोपमाः । यौवनं जलरेखेव, सर्वमेतदशाश्वतम् ॥ ९ ॥ तत्त्वामृत श्लो० १५२

जीवितं विद्युता तुल्यं, संयोगाः स्वप्नसन्निभाः । सन्ध्यारागसमः स्नेहः, शरीरं तृणबिन्दुवत् ॥१०॥ त. श्लो. १५१

सर्वे क्षयान्ता निचयाः, पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता, मरणान्तं हि जीवितम् ॥ ११ ॥

यौवनं जीवितं चित्तं, छाया लक्ष्मीश्च स्वामिता । चञ्चलानि षडेतानि, ज्ञात्वा धर्मरतो भवेत् ॥ १२ ॥

इत्यनित्यं जगद्वृत्तं, स्थिरचित्तः प्रतिक्षणम् । तृष्णा कृष्णाहिमन्त्राय निर्ममत्वाय चिन्तयेत् ॥१३॥ यो. प्र.४ श्लो.६६

## ४७ अशरणभावना

ये षट्खण्डमहीमहीनतरसा निर्जित्य बभ्राजिरे, ये च स्वर्गभुजो भुजोर्जितमदा मेदुर्मुदा मेदुराः ।
तेऽपि क्रूरकृतान्तवक्त्ररदनैर्निर्दल्यमाना हठा-दत्राणाः शरणाय हा दश दिशः प्रेक्षन्त दीनाननाः ॥ १ ॥

तावदेव मदविभ्रममाली, तावदेव गुणगौरवशाली । यावदक्षमकृतान्तकटाक्षै-र्नेक्षितो विशरणो नरकीटः ॥ २ ॥

प्रतापैर्व्यापिन्नं गलितमथ तेजोभिरुदितै-र्गतं धैर्योद्योगैः श्लथितमथ पुष्टेन वपुषा ।
प्रवृत्तं तद्द्रव्यग्रहणविषये बान्धवजनैर्जने कीनाशेन प्रसभमुपनीते निजवशम् ॥ ३ ॥ शा. द्वि. प्र.

अहनि अहनि भूतानि गच्छन्ति यममन्दिरम् । शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम् ॥ ४ ॥

# ४५ अतिथिसंविभागव्रतम्



अतिथिभ्योऽशनावास-वासःपात्रादिवस्तुनः यत्प्रदानं तदतिथि-संविभागव्रतं भवेत् ॥ १ ॥ उ. स्त. ११ व्या. १६३
पश्य सङ्गमको नाम सम्पदं वत्सपालकः । चमत्कारकरीं प्राप, मुनिदानप्रभावतः ॥ २ ॥ यो. तृ. प्र. श्लो. ८८

# ४६ अनित्यभावना



अनित्यत्वाशरणते भवमेकत्वमन्यताम् , अशौचमाश्रवं चात्मन्, संवरं परिभावय ॥ १ ॥
कर्मणो निर्जरां धर्म-स्वक्ततां लोकपद्धातिम् । बोधिदुर्लभतामेता. भावयन् मुच्यसे भवात् ॥ २ ॥
आयुर्वायुतरत्तरङ्गतरलं लग्नापदः सम्पदः, सर्वेऽपीन्द्रियगोचराश्च चटुलाः सन्ध्याभ्ररागादिवत् ।
मित्रस्त्रीस्वजनादिसङ्गमसुखं स्वप्नेन्द्रजालोपमम्, तत्किं वस्तु भवे भवेदिह मुदामालम्बनं यत्सताम् ॥ ३ ॥
अम्भोधीनपि शोषयन्ति चतुरो येऽनन्तवीर्यान्विता, ये मेरुन् दलयन्ति वज्रकठिनैर्मुष्टिप्रहारैरपि ।
दण्डीकृत्य सुराचलं वसुमतीं छत्राकृतिं कुर्वते, तावत्तेऽपि जनाः कृतान्तवदने कालेन सर्वे गताः ॥ ४ ॥
यत्प्रातस्तन्न मध्याह्ने, यन्मध्याह्ने न तन्निशि। निरीक्ष्यते भवेऽस्मिन् ही ! पदार्थानामनित्यता ॥५॥ यो.प्र.४ श्लो.५७
याति कालो गलत्यायुर्विभूतिरतिचञ्चला । प्रियेषु क्षणिकं प्रेम, कथं धर्मेऽवधीरणा ॥ ६ ॥
चेतोहरा युवतयः स्वजनोऽनुकूलः, सद्बांधवाः प्रणयगर्भगिरश्च भृत्याः ।

या च बालक ! ते माता सा मे माता पितामही । भ्रातृजाया वधूः श्वश्रूः, सपत्नी च भवत्यहो ॥१०॥ सु० पृ. १०८-१०९

रम्भागर्भसमः सुखी शिखिशिखा वर्णाभिरुच्चैरयः। सूचिभिः प्रतिरोममेदितवपुस्तारुण्यपुण्यः पुमान् ॥
दुःखं यल्लभते तदष्टगुणितं स्त्रीकुक्षिमध्यस्थितौ, संपद्येत ततोऽप्यनन्तगुणितं जन्मक्षये प्राणिनाम् ॥ ११ ॥

पापी रूपविवर्जितो गतकृपो यो नारकादागतः, तिर्यग्योनिसमागतश्च कपटी नित्यं बुभुक्षातुरः ।
मानी ज्ञानविवेकबुद्धिकलितो यो मर्त्यलोकागतो, यस्तु स्वर्गसमागतः स सुभगः प्राज्ञः कविः श्रीयुतः ॥ १३ ॥

सुभाषितसूक्तसंग्रह पृष्ट १११

## ४९ एकत्व भावना

एक एव भगवानयमात्मा, ज्ञानदर्शनतरङ्गसरङ्गः । सर्वमन्यदुपकल्पितमेतद्, व्याकुलीकरणमेव ममत्वम् ॥ १ ॥
अबुधैः परभावलालसा–लसदज्ञानदशावशात्मभिः । परवस्तुषु हा स्वीकीयता, विषयावेशवशाद् विकल्प्यते ॥ २ ॥
कृतिनां दयितेति चिन्तनम्, परदारेषु यथा विपत्तये । विविधार्तिभयावहं तथा, परभावेषु ममत्वभावनम् ॥ ३ ॥
अधुना परभावसंवृतिं हर चेतः परितोऽवगुण्ठिताम् । क्षणमात्मविचारचन्दन–द्रुमवातोर्मिरसा स्पृशन्तु माम् ॥४॥
एकतां समतोपेता–मेनामात्मन् विभावय । लभस्व परमानन्द–सम्पदं नमिराजवत् ॥ ५ ॥ श्रीशान्त सु० च० प्र०

यद्वद् द्रुमे महति पक्षिगणा विचित्राः, कृत्वाश्रयं हि निशि यान्ति पुनः प्रभाते ॥
तद्वज्जगत्यसकृदेव कुटुम्बजीवाः, सर्वे समेत्य पुनरेव दिशो भजन्ते ॥ ६ ॥ (उत्तराध्ययन टीका)

अस्मिन् महामोहमये कटाहे सूर्याग्निना रात्रिदिवेन्धनेन । मासर्तुदर्वी परिघट्टनेन भूतानि कालः पचतीति वार्ता ॥ ५ ॥

## ४८ संसार भावना

इतो लोभः क्षोभं जनयति दुरन्तो दव इवो–ल्लसल्लाभाम्भोधिः कथमपि न शक्यः शमयितुम् ॥
इतस्तृष्णाऽक्षाणां तुदति मृगतृष्णेव विफला, कथं स्वस्थैः स्थेयं विविधभयभीमे भववने ॥ १ ॥
गलत्येका चिन्ता भवति पुनरन्या तदधिका, मनोवाक्काये हा विकृतिरतिरोषान्तरजसः ॥
विपद्गर्तावर्ते झटिति पतयालोः प्रतिपदं, न जन्तोः संसारे भवति कथमप्यर्तिविरतिः ॥ २ ॥
सहित्वा सन्तापानशुचिजननीकुक्षिकुहरे, ततो जन्म प्राप्य प्रचुरतकष्टक्रमहतः ॥
सुखाभासैर्यावत् स्पृशति कथमप्यर्तिविरतिं, जरा तावत्कायं कवलयति मृत्योः सहचरी ॥ ३ ॥
विभ्रान्तचित्तो बत बम्भ्रमीति, पक्षीव रुद्धस्तनुपञ्जरेऽङ्गी। नुन्नो नियत्याऽतनुकर्मतन्तु–सन्दानितः सन्निहितान्तकौतुः॥४॥
अनन्तान्पुद्गलावर्तानन्तानन्तरुपभृत् । अनन्तशो भ्रमत्येव जीवोऽनादिभवार्णवे ॥ ५ ॥ शा० तृ० प्रकाशात्
यः पिता स भवेत्पुत्रो यः पुत्रः स भवेत् पिता। या कान्ता सा भवेन्माता, या माता साऽपि सा भवेत् ॥ ६ ॥
वृद्धस्य मृतभार्यस्य, पुत्राधीनधनस्य च । स्नुषावाक्येन दग्धस्य जीवितान्मरणं वरम् ॥ ७ ॥
भ्राताऽसि तनुजन्माऽसि, वरस्यावरजोऽसि च । भ्रातृव्योऽसि पितृव्योऽसि, पुत्रपुत्रोऽसि चार्भक ! ॥ ८ ॥
यश्च बालक ! ते पिता स मे भवति सोदरः। पिता पितामहो, भर्ता तनयः श्वसुरोऽपि च ॥ ९ ॥



कर्पूरादिभिरर्चितोऽपि लशुनो नो गाहते सौरभं, नाजन्मोपकृतोऽपि हन्त पिशुनः सौजन्यमालम्बते ।
देहोऽप्येष तथा जहाति न नृणां, स्वाभाविकीं विस्रतां, नाभ्यक्तोऽपि विभूषितोऽपि बहुधा पुष्टोऽपि विश्वस्यते ॥३॥
यदीयसंसर्गमवाप्य सद्यो भवेच्छुचीनामशुचित्वमुच्चैः। अमेध्ययोनेर्वपुषोऽस्य शौचसङ्कल्पमोहोऽयमहो महीयान् ॥ ४ ।
इत्यवेत्य शुचिवादमतथ्यम् पथ्यमेव जगदेकपवित्रम्, शोधनं सकलदोषमलानाम्, धर्ममेव हृदये निदधीथाः ॥५॥ शा. प्र.
वसारुधिरमांसास्थियकृद्विण्मूत्रपूरिते। वपुष्यशुचिनिलये मूर्छां कुर्वीत कः सुधीः ॥६॥ म. च. सर्ग १ श्लो. २५३

## ५२ आश्रवभावना

यथा सर्वतो निर्झरैरापतद्भिः, प्रपूर्येत सद्यः पयोभिस्तटाकः ।
तथैवाश्रवैः कर्मभिः सम्भृतोऽङ्गी, भवेद्व्याकुलश्चञ्चलः पङ्किलश्च ॥ १ ॥
यावत्किञ्चिदिवानुभूय तरसा कर्मेह निर्जीर्यते, तावच्चाश्रवशत्रवोऽनुसमयं सिञ्चन्ति भूयोऽपि तत् ।
हा कष्टं कथमाश्रवप्रतिभटाः शक्या निरोद्धुं मया, संसारादतिभीषणान्मम हहा मुक्तिः कथं भाविनी ॥ २ ॥
मिथ्यात्वाऽविरतिकषाययोगसंज्ञाश्चत्वारः सुकृतिभिराश्रवाः प्रदिष्टाः ।
कर्माणि प्रतिसमयं स्फुटैरमीभिर्बध्नन्तो भ्रमवशतो भ्रमन्ति जीवाः ॥ ३ ॥
इन्द्रियाव्रतकषाययोगजाः, पञ्च पञ्च चतुरन्विता स्त्रयः । पञ्चविंशतिरसत्क्रिया इति, नेत्रवेदपरिसङ्ख्ययाऽप्यमी ॥४॥
इत्याश्रवाणामधिगम्य तत्त्वम्, निश्चित्य सत्त्वं श्रुतिसन्निधानात् ।



एकोऽहं न च मे कश्चित् स्वः परो वाऽपि विद्यते । यदेको जायते जन्तुर्म्रियते चैक एव हि॥७॥ सु० सं० पृ० ११२

## ५० अन्यत्वभावना

आत्मनः सर्वमप्येतदन्यत्तदिह तत्कृते, कृत्वा कर्म भवाब्धौ स्वं, पातयत्यबुधो जनः ॥ १ ॥
यत्रान्यत्वं शरीरस्य, वैसदृश्याच्छरीरिणः । धनबन्धुसहायानां तत्रान्यत्वं न दुर्वचम् ॥ २ ॥
यो देह धनबन्धुभ्यो, भिन्नमात्मानमीक्षते । क्व शोकशंकुना तस्य, हन्तातङ्कः प्रतन्यते ? ॥ ३ ॥
आत्मदेहादिभावानां, यद्यन्यत्वं स्फुटं ननु । ततो देहप्रहारादौ, कथमात्मा प्रपीड्यते ॥ ४ ॥ त्रि. श्री.
एक उत्पद्यते जन्तुरेक एव विपद्यते । कर्माण्यनुभवत्येकः प्रचितानि भवान्तरे ॥ ५ ॥ यो. प्र. ४ श्लो. ६८
भिन्नः शरीरतो जीवो जीवाद्भिन्नश्च विग्रहः । विदन्निति वपुर्नाशेऽप्यन्तः खिद्येत कः कृती ॥ ६ ॥ उ. अ. २
ज्ञानदर्शनचारित्रकेतनां चेतनां विना । सर्वमन्यद्विनिश्चित्य यतस्व स्वहिताप्तये ॥ ७ ॥ शा. प्र. ५

## ५१ अशुचित्वभावना

सच्छिद्रो मदिराघटः परिगलत्तल्लेशसङ्गाशुचिः, शुच्यामृद्य मृदा बहिः स बहुशो धौतोऽपि गङ्गोदकैः ।
नाधत्ते शुचितां यथा तनुभृतां कायो निकायो महा-बीभत्सास्थिपुरीषमूत्ररजसां नायं तथा शुद्ध्यति ॥ १ ॥
स्नायं स्नायं पुनरपि पुनः स्नान्ति शुद्धाभिरद्भि-र्वारं वारं बत समलतनुं चन्दनैरर्चयन्ते ।
मूढात्मानो वयमपमलाः प्रीतिमित्याश्रयन्ते, नो शुध्यन्ते कथमवकरः शक्यते शोद्धुमेवम् ॥ २ ॥

निर्जरापि द्वादशधा, तपोभेदैस्तथोदिता । कर्मनिर्जरणात्मा तु, सैकरुपैव वस्तुतः ॥ ३ ॥

निकाचितानामपि कर्मणां यद्, गरीयसां भूधरदुर्धराणाम् । विभेदने वज्रमिवातितीव्रम्, नमोऽस्तु तस्मै तपसेऽद्भुताय ॥४॥
किमुच्यते सत्तपसः प्रभावः, कठोरकर्मार्जितकिल्बिषोऽपि । दृढ प्रहारीव निहत्य पापम्, यतोऽपवर्गं लभतेऽचिरेण ॥५॥
यथा सुवर्णस्य शुचिस्वरूपम्, दीप्तः कृशानुः प्रकटीकरोति । तथात्मनः कर्मरजो निहत्य, ज्योतिस्तपस्तद्विशदीकरोति ॥६॥
बाह्येनाभ्यन्तरेण प्रथितबहुभिदा जीयते येन शत्रु–श्रेणी बाह्यान्तरङ्गा भरतनृपतिवद्भावलब्धद्रढिम्ना ।
यस्मात्प्रादुर्भवेयुः प्रकटितविभवा लब्धयः सिद्धयश्च, वन्दे स्वर्गापवर्गार्पणपटुसततं तत्तपो विश्ववन्द्यम् ॥७॥ शा. न. प्र.

## ५५ लोकस्वरूपभावना

सप्ताधोऽधो विस्तृता याः पृथिव्यश्छत्राकाराः सन्ति रत्नप्रभाद्याः,
ताभिः पूर्णो योऽस्त्यधोलोक एतौ पादौ यस्य व्यायतौ सप्तरज्जू ॥ १ ॥
तिर्यग्लोको विस्तृतो रज्जुमेकाम्, पूर्णो द्वीपैरर्णवान्तैरसङ्ख्यैः ।
यस्य ज्योतिश्चक्रकाञ्चीकलापम्, मध्ये कार्श्यं श्रीविचित्रं कटित्रम् ॥ २ ॥
लोकोऽथोर्ध्वं ब्रह्मलोके द्युलोके, यस्य व्याप्तौ कूर्परौ पञ्चरज्जू ।
लोकस्याऽन्तो विस्तृतो रज्जुमेकां, सिद्धज्योतिश्चित्रको यस्य मौलिः ॥ ३ ॥
यो वैशाखस्थानकस्थायिपादः, श्रोणीदेशे न्यस्तहस्तद्वयश्च ।

एषां निरोधे विगलद्विरोधे, सर्वात्मना द्राग् यतितव्यमात्मन् ॥ ५ ॥ शान्तसुधारस सप्तमप्रकाशात्

## ५३ संवरभावना

येन येन य इहाश्रवरोधः, सम्भवेन्नियतमौपयिकेन। आद्रियस्व विनयोद्यतचेतास्तत्तदान्तरदृशा परिभाव्य ॥१॥
संयसेन विषयाविरतत्वे, दर्शनेन वितथाभिनिवेशम्। ध्यानमार्त्तमथ रौद्रमजस्रम्, चेतसः स्थिरतया च निरुन्ध्याः ॥२॥
क्रोधं क्षान्त्या मार्दवेनाभिमानम्, हन्या मायामार्जवेनोज्ज्वलेन।
लोभं वारांराशि रौद्रं निरुध्याः, सन्तोषेण प्रांशुना सेतुनेव ॥ ३ ॥
गुप्तिभिस्तिसृभिरेवमजय्यान्, त्रीन् विजित्य तरसाधमयोगान्। साधुसंवरपथे प्रयतेथा, लप्स्यसे हितमनीहितमिद्धम् ॥४॥
एवं रुद्धेष्वमलहृदयैराश्रवेष्वाप्तवाक्य—श्रद्धाचञ्चत्सितपटपटुः सुप्रतिष्ठानशाली।
शुद्धैर्योगैर्जवनपवनैः प्रेरितो जीवपोतः, स्रोतस्तीर्त्वा भवजलनिधेर्याति निर्वाणपुर्याम् ॥५॥ शान्त अ. प्रस्तावात्

## ५४ निर्जराभावना

यन्निर्जरा द्वादशधा निरुक्ता, तद्द्वादशानां तपसां विभेदात्।
हेतुप्रभेदादिह कार्यभेदः, स्वातन्त्र्यतस्त्वेकविधैव सा स्यात् ॥ १ ॥
काष्ठोपलादिरूपाणां, निदानानां विभेदतः। वह्निर्यथैकरूपोऽपि, पृथग्रूपो विवक्ष्यते ॥ २ ॥

भ्रमन् दूरमग्नो भवागाधगर्ते, पुनः क्व प्रपद्येत तद्बोधिरत्नम् ॥ ४ ॥ शान्तसुधारस. द्वादशप्रकाशात्

## ५७ धर्मभावना

दानं च शीलं च तपश्च भावो, धर्मश्चतुर्धा जिनबान्धवेन । निरूपितो यो जगतां हिताय, स मानसे मे रमतामजस्रम् ॥१॥
सत्यक्षमामार्दवशौचसङ्गत्यागाऽऽर्जवब्रह्मविमुक्तियुक्तः । यः संयमः किं च तपोऽवगूढश्चारित्रधर्मो दशधाऽयमुक्तः ॥२॥
यस्य प्रभावादिह पुष्पदन्तौ, विश्वोपकाराय सदोदयेते । ग्रीष्मोष्मभीष्मामुदितस्तडित्वान्, काले समाश्वासयति क्षितिं च ॥३॥
उल्लोलकल्लोलकलाविलासैर्न प्लावयत्यम्बुनिधिः क्षितिं यत् । न घ्नन्ति यद्व्याघ्रमरुद्दवाद्या, धर्मस्य सर्वोऽप्यनुभाव एषः ॥४॥
प्राज्यं राज्यं सुभगदयिता, नन्दनानन्दनानाम्, रम्यं रूपं सरसकविता—चातुरी सुस्वरत्वम् ।
नीरोगत्वं गुणपरिचयः सज्जनत्वं सुबुद्धिम्, किं नु ब्रूमः फलपरिणतिं धर्मकल्पद्रुमस्य ॥ ५ ॥ शा. दश०

## ५८ मैत्र्यादिभावना

परहितचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा । परसुखतुष्टिर्मुदिता, परदोषोपेक्षणमुपेक्षा ॥१॥ ध.अ.४, २२६ सू
मैत्री परस्मिन् हितधीः समग्रे, भवेत् प्रमोदो गुणपक्षपातः । कृपा भवार्त्ते प्रतिकर्तुमीहो—पेक्षैव माध्यस्थ्यमवार्यदोषे ॥२॥
अध्यात्मकल्पद्रुम, अधिकार १ श्लो. १२
मा कार्षीत् कोऽपि पापानि, मा च भूत् कोऽपि दुःखितः । मुच्यतां जगदप्येषा, मतिर्मैत्री निगद्यते ॥३॥ यो. प्र.४ श्लो. ११८

कालेऽनादौ शश्वदूर्ध्वंदमत्वाद्, विश्राणोऽपि श्रान्तमुद्रामखिन्नः ॥ ४ ॥
सोऽयं ज्ञेयः पूरुषो लोकनामा, षड्द्रव्यात्माऽकृत्रिमोऽनाद्यनन्तः। धर्माधर्माकाशकालात्मसंज्ञैर्द्रव्यैः, पूर्णः सर्वतः पुद्गलैश्च॥५॥
रङ्गस्थानं पुद्गलानां नटानाम्, नानारूपैर्नृत्यतामात्मनां च ।
कालोद्योगस्वस्वभावादिभावैः, कर्मातोद्यैर्नर्तितानां नियत्या ॥ ६ ॥
एवं लोको भाव्यमानो विविक्त्या, विज्ञानां स्यान् मानसस्थैर्यहेतुः ।
स्थैर्यं प्राप्ते मानसे चात्मनीना, सुप्राप्यैवाध्यात्मसौख्यप्रसूतिः ॥ ७ ॥ शान्तसुधारसएकादशप्रकाशात्

## ५६ बोधिदुर्लभभावना

यस्माद्विस्मापयितसुमनःस्वर्गसम्पद्विलासाः, प्राप्तोल्लासाः पुनरपि जनिः सत्कुले भूरिभागे ।
ब्रह्माद्वैतप्रगुणपदवीप्रापकं निःसपत्नम्, तद्दुष्प्रापं भृशमुरुधियः सेव्यतां बोधिरत्नम् ॥ १ ॥
अनादौ निगोदान्धकूपे स्थिताना—मजस्रं जनुर्मृत्युदुःखार्दितानाम् ।
परीणामशुद्धिः कुतस्तादृशी स्याद्, यया हन्त तस्माद्विनिर्यान्ति जीवः ॥ २ ॥
ततो निर्गतानामपि स्थावरत्वं, त्रसत्वं पुनर्दुर्लभं देहभाजाम् ।
त्रसत्वेऽपि पञ्चाक्षपर्याप्तसंज्ञि–स्थिरायुष्यवद्दुर्लभं मानुषत्वम् ॥ ३ ॥
तदेतन्मनुष्यत्वमाप्यापि मूढो महामोहमिथ्यात्वमायोपगूढः ।

उपाश्रयो येन दत्तो मुनीनां गुणशालिनाम् । तेन ज्ञानाद्युपष्टम्भदायिना प्रददे न किम् ? ॥ ७ ॥ उ. सू. अ. १ पृ. १२
सुरर्द्धिः सुकुलोत्पत्तिर्भोगलब्धिश्च जायते । साधूनां स्थानदानेन, क्रमान्मोक्षश्च लभ्यते ॥ ८ ॥ उ. अ. ३ पृ. १२
इयं मोक्षफले दाने, पात्रापात्रविचारणा । दयादानं तु सर्वज्ञैः, कुत्रापि न निषिध्यते ॥ ९ ॥ पा. स. ६ श्लो. ५४
चतुःसागरपर्यन्तां, यो दद्यात्पृथिवीमिमाम् । एकश्च जीवितं दद्यात्तयोरभयदोऽधिकः ॥ १० ॥ क. श्लो. ६९
दीयते म्रियमाणस्य कोटिर्जीवितमेव च । धनकोटिं न गृह्णीयात्, सर्वो जीवितुमिच्छति ॥ ११ ॥ यो. श्लो. २७
अन्नदानात्परं नास्ति, विद्यादानं ततोऽधिकम् । अन्नेन क्षणिका तृप्तिर्यावज्जीवं तु विद्यया ॥ १२ ॥
ज्ञानवान् ज्ञानदानेन, निर्भयोऽभयदानतः। अन्नदानात्सुखी नित्यो निर्व्याधिर्भेषिजाद् भवेत् ॥१३॥ वि. स. ११ श्लो. ८६३
व्याजे स्याद्विगुणं वित्तं, व्यवसाये चतुर्गुणम् । क्षेत्रे दशगुणं प्रोक्तं, पात्रेऽनन्तगुणं भवेत् ॥ १४ ॥ उ. पृ. १२ श्लो. ४०
फलं यच्छति दातृभ्यो, दानं नात्रास्ति संशयः । फलं तुल्यं ददात्येतदाश्चर्यं त्वनुमोदकम् ॥ १५ ॥ उ, भा. २ पृ. १५०
संपत्तौ नियमः शक्तौ, सहनं यौवने व्रतम् । दारिद्र्ये दानमत्यल्पमपि लाभाय जायते ॥ १६ ॥
पश्चाद्दत्तं परैर्दत्तं लभ्यते वा न लभ्यते । स्वहस्तेन च यद्दत्तं, लभ्यते तन्न संशयः ॥ १७ ॥
मा मंस्थाः क्षीयते वित्तं, दीयमानं कदाचन । कूपारामगवादीनां, ददतामेव सम्पदः ॥ १८ ॥
अदत्तदानाच्च भवेद्दरिद्री. दरिद्रभावाद्वितनोति पापम् । पापं हि कृत्वा नरकं प्रयाति, पुनर्दरिद्री पुनरेव पापी ॥१९॥
दानं भोगोनाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ २० ॥
कियदिदमधिकं मे यद् द्विजायार्थयित्रे, कवचमरमणीयं कुण्डले चार्पयामि ॥ २१ ॥

सर्वेऽपि सन्तु सुखिनः, सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु, मा कश्चित्पापमाचरेत् ॥ ४ ॥ ध. अ.३ सू.२१२
अपास्ताशेषदोषाणां, वस्तुतत्त्वावलोकिनाम् । गुणेषु पक्षपातो यः, स प्रमोदः प्रकीर्तितः ॥५॥ यो. प्र.४ श्लो. ११९
दीनेष्वर्त्तेषु भीतेषु, याचमानेषु जीवितम् । प्रतीकारपरा बुद्धिः, कारुण्यमभिधीयते ॥६॥ यो. प्र.४ श्लो. १२०
क्रूरकर्मसु निःशङ्कं, देवतागुरुनिन्दिषु । आत्मशंसिषु योपेक्षा, तन्माध्यस्थ्यमुदीरितम् ॥ ७ ॥ यो. प्र.४ श्लो १२१
मैत्री सकलसत्त्वेषु, प्रमोदो गुणशालिषु । माध्यस्थ्यमविनेयेषु, करुणा सर्वदेहिषु ॥ ८ ॥
धर्मकल्पद्रुमस्यैता, मूलं मैत्र्यादिभावनाः । यैर्न ज्ञाता न चाभ्यस्ताः, स तेषामतिदुर्लभः ॥ ९ ॥ यो.प्र.२ श्लो. ६,७

## ५९ दानम्

उपार्जितानामर्थानां, त्याग एव हि रक्षणम् । तडागोदरसंस्थानां, परिवाहोऽम्भसामिव ॥ १ ॥ जै. पंच पृ० ४
यद्ददासि विशिष्टेभ्यो, यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये, शेषं कस्यापि रक्षसि ॥ २ ॥ वे. अ.४ श्लो.१६
देयं भोज ! धनं धनं सुविधिना नो संचितव्यं कदा, श्रीकर्णस्य बलस्य विक्रमनृपस्याद्यापि कीर्तिर्यतः ।
येनेदं बहुपाणिपादयुगलं घृष्यन्ति भो मक्षिका, अस्माकं मधु दानभोगरहितं नष्टं चिरात् संचितम् ॥३॥ उ.पृ.१० श्लो. ३२
भिक्षुका नैव याचन्ते, बोधयन्ति दिने दिने । दीयतां दीयतां किञ्चिददातुः फलमीदृशम् ॥ ४ ॥
संग्रहैकपरः प्रायः, समुद्रोऽपि रसातलम् । दाता तु जलदः पश्य, भुवनोपरि गर्जति ॥ ५ ॥ प्र. पृ. १४० श्लोक १
अशनादीनि दानानि धर्मोपकरणानि च, साधुभ्यः साधुयोग्यानि देयानि विधिना बुधैः ॥ ६ ॥ उ. टीका

कर्णस्त्वचं शिबिर्मांसं, जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि, नास्त्यदेयं महात्मानाम् ॥ ३६ ॥ सू. पृ. ६७-६८
नेव दारं पिहावेइ, भुंजमाणो सुसावओ । अणुकंपा जिणिंदेहिं, सड्ढाणं न निवारिया ॥ ३७ ॥ सु. पृ.१८ श्लो.१५
पाकारेणोच्यते पापं, त्रकारस्त्राणवाचकः। अक्षरद्वयसंयोगे, पात्रमाहुर्मनीषिणः (मनस्विनः) ॥३८॥ सु.सू. पृ.२१ श्लो.२
मिथ्यादृष्टिसहस्रेषु, वरमेको ह्यणुव्रती । अणुव्रतिसहस्रेषु, वरमेको महाव्रती ॥ ३९ ॥
महाव्रतिसहस्रेषु, वरमेको जिनाधिपः । जिनाधिपसमं पात्रं, न भूतं न भविष्यति ॥४० ॥ सु. सू पृ.२२ श्लो.१७-१८
अनादरो विलम्बश्च, वैमुख्यं विप्रियं वचः । पश्चात्तापश्च दातुः स्यात्, दानदूषणपञ्चकम् ॥ ४१ ॥
आनन्दाश्रूणि रोमाञ्चं बहुमानं प्रियं वचः । तथानुमोदना पात्रे, दानभूषणपञ्चकम् ॥ ४२ ॥

## ६० शीलम्

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक् संयमो, ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे-व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता, सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥१॥ भ. नी. श्लो.८०
अमराः किङ्करायन्ते, सिद्धयः सहसङ्गता । समीपस्थायिनी संपच्छीलालङ्कारशालिनाम् ॥२॥ उ. प्रा. भा. १ पृ. १८८
वरं प्रवेशो ज्वलिते हुताशने, न चापि भग्नं चिरसञ्चितव्रतम् ॥
वरं हि मृत्युः सुविशुद्धचेतसो, न चापि शीलस्खलितस्य जीवितम ॥ ३ ॥ सूत्रकृताङ्ग पत्र ६३,
यां चिन्तयामि सततं मयि सा विरक्ता, साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।

अकरुणमवकृत्य द्राक् कृपाणेन निर्यद्बहलरुधिरधारं मौलिमावेदयामि ॥ २२ ॥
जीवितव्यं ददानेन, दत्तं त्रिभुवनं ततः । हरता तत्तु सर्वस्वं, हृतं शून्यीकृतं जगत् ॥२३॥ पा. सर्ग २ श्लो. ४८
यत्तु प्रत्युपकाराय, फलमुद्दिश्य वा पुनः। दीयते हि परिक्लिष्टं, तद् दानं राजसं स्मृतम् ॥२४॥ पा. सर्ग ६ श्लो.५४५
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं, तद्दानं तामसं स्मृतम् ॥२५॥ पार्श्वनाथ च. सर्ग ६, ५४६
धणसत्थवाहजम्मे, जं घयदाणं कयं सुसाहूणं । तक्कारणमुसभजिणो, तेलुक्क—पियामहो जाओ ॥ २६ ॥
करुणाइ दिन्नदाणो, जम्मंतरगहियपुन्नकिरियाणो । तित्थयरचक्करिद्धिं, संपत्तो संतिनाहोवि ॥ २७ ॥
दाऊण खीरदाणं, तवेण सुसिअंग साहुणो धणिअं । जणजणियचमक्कारो, संजाओ सालिभद्दो वि ॥ २८॥ देवे. दान.
पात्रे धर्मनिबन्धनं तदपरे प्रोद्यद्दयाख्यापकम्, मित्रे प्रीतिविवर्धकं रिपुजने वैरापहारक्षमम् ॥
भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदम्, भट्टादौ च यशस्करं वितरणं न क्वाऽप्यहो निष्फलम् ॥२९॥ सि. प्र.
दारिद्र्यनाशनं दानं, शीलं दुर्गतिनाशनम् । अज्ञाननाशिनी प्रज्ञा, भावना भवनाशिनी ॥ ३० ॥ सुभाषित सं०
भीमः- मूर्खतपस्वी राजेन्द्र ! विद्वांश्च वृषलीपतिः । उभौ तौ तिष्ठतो द्वारे, कस्य दानं प्रदीयते ॥ ३१ ॥
युधिष्ठिरः- सुखासेव्यं तपो भीम ! विष्ठा कष्टदुराचरी । विद्वांसं पूजयिष्यामि, तपोभिः किं प्रयोजनम् ॥ ३२ ॥
कृष्णः- न विद्यया केवलया, तपसा चापि पात्रता । यत्र वृत्तमिमे चेमे, तद्धि पात्रं प्रचक्षते ॥ ३३ ॥
अभयं सुपत्तदाणं अणुकंपा उचिअं च कित्तिदाणं च । दोहिवि मुक्खो भणियो तिण्णेवि भोगादियं दिंति ॥३४॥
उत्तमोऽप्रार्थितो दत्ते, मध्यमः प्रार्थितः पुनः । याचकैर्याच्यमानोऽपि, दत्ते न त्वधमाधमः ॥ ३५ ॥

हे लोकपाला लोकाश्च सर्वे श्रृणुत यद्यहम् । अन्यमम्यलपं रामात्, तदग्निर्मां दहत्वयम् ॥ १५ ॥
अन्यथा तु सुखस्पर्शो वारीवास्त्वित्युदीर्य सा । झम्पां स्मृतनमस्कारा ददौ तस्मिन् हुताशने ॥ १६ ॥
आस्फलद्वीचिनिचयमणिसोपानबन्धुरा । बद्धोभयतटा रत्नोपलैर्वापी:बभूव सा ॥ १७ ॥
यस्य स्नेहो भयं तस्य, स्नेहो दुःखस्य भाजनम् । स्नेहमूलानि दुःखानि, तत्त्यक्त्वा च वसेत्सुखम् ॥१८॥

## ६१ तप

तपः सर्वाक्षसारंग–वशीकरणवागुरा । कपायतापमृद्विका, कर्माजीर्णहरीतकी ॥ १ ॥ आचा. वर्ग १, श्लो. ५४
यत्पूर्वार्जितकर्मशैलकुलिशं, यत्कामदावानल—ज्वालाजालजलं यदुग्रकरणग्रामाहिमन्त्राक्षरम् ॥
यत्प्रत्यूहतमःसमूहदिवसं यल्लब्धिलक्ष्मीलता—मूलं तद्द्विविधं यथाविधि तपः कुर्वीत वीतस्पृहः ॥२॥ सि. श्लो.८१
तपः सकललक्ष्मीणां, नियन्त्रणमशृङ्खलम्, दुरितप्रेतभूतानां, रक्षामन्त्रो निरक्षरः ॥ ३ ॥ सू० पृ. २०७ श्लो. २
यावत्स्वास्थ्यं शरीरस्य, यावच्चेन्द्रियसंपदः । तावद्युक्तं तपःकर्तुं, वार्धक्ये केवलं श्रमः ॥ ४ ॥ त. श्लो. १७
अद्यश्वीनविनाशस्य, शरीरस्य शरीरिणाम् । सकामनिर्जरासारं, तप एव महत्फलम् ॥ ५ ॥ यो. पृ० ११० श्लो० ३८
मलं स्वर्णगतं वह्निर्हंसः क्षीरगतं जलम् । यथा पृथक्करोत्येवं, जन्तोः कर्ममलं तपः ॥ ६ ॥ उ. अ० २ पृ० ५८ श्लो.४५
अनशनमौनोदर्यं, वृत्तेः संक्षेपणं तथा । रसत्यागस्तनुक्लेशो, लीनतेति बहिस्तपः ॥७॥ त्रि. प. १ स. १ श्लो.१९८
प्रायश्चित्तं वैयावृत्त्यं, स्वाध्यायो विनयोऽपि च। व्युत्सर्गोऽथ शुभध्यानं, पोढेत्याभ्यन्तरं तपः ॥८॥ त्रि. प. १ स.१ श्लो.१९९

अस्मत्कृते च परितुष्यति काचिदन्या, धिक् तां च तं च मदनं च इमां च मां च ॥४॥ भ. नीति श. श्लो. २
व्रतानामपि शेषाणां, चतुर्थव्रतभङ्गके । लीलया भेदतामाहुस्तस्माद्दुःशीलतां त्यजेत् ॥५॥ उ. प्रा. भा. १ पृ. १८७
चालणिजलेण चंपाइ, जीइ उग्घाडिअं दुवारतियं । कस्स न हरेइ चित्तं, तीए चरिअं सुभद्दाण ॥ ६ ॥
थुणिउं तस्स न सक्का, सड्डस्स सुदंसणस्स गुणनिवहं । जो विसमसंकडेसुवि, पडिओवि अखंडसीलधणो ॥ ७ ॥
वेआल–भूअ–रक्खस, केसरि–चित्तय–गइंद–सप्पाणं । लीलाइ दलइ दप्पं, पालंतो निम्मलं सीलं ॥ ८ ॥ श्री शीलकुल०
श्रीमन्नेमिजिनो दिनोऽघतमसां जम्बुप्रभुः केवली, सम्यग्दर्शनवान् सुदर्शनगृही स स्थूलभद्रो मुनिः ।
सच्चंकारी सरस्वती च सुभगा सीता सुभद्रादयः, शीलोदाहरणे जयन्ति जनितानन्दा जगत्यद्भुताः ॥ ९ ॥
काएण बंभचेरं, धरंति भव्वाउ जे असुद्धमणा । कप्पंमि बंभलोए, ताणं नियमेण उववाओ ॥ १० ॥
सीतया दुरपवादभीतया, पावके स्वतनुराहुतीकृता । पावकस्तु जलतां जगाम, यत्तत्र शीलमहिमा विजृम्भितम् ॥११॥ सू. पृ. ७१
वेश्या रागवती सदा तदनुगा षड्भिरसैर्भोजनम्, शुभ्रं धाम मनोहरं वपुरहो ! नव्यो वयः संगमः ।
कालोऽयं जलदाविलस्तदपि यः, कामं जिगायाऽऽदरात्, तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं मुनिम् ॥ १२ ॥
श्रीनन्दिषेणरथनेमिमुनिश्वरार्द्रबुद्ध्या त्वया मदन ! रे ! मुनिरेष दृष्टः ।
ज्ञातं न नेमिमुनिजम्बूसुदर्शनानां, तुर्यो भविष्यति निहत्य रणाङ्गणे माम् ॥ १३ ॥ सु. सूक्त. पृ. २४, २५ श्लो. १, ४
मनसि वचसि काये जागरे स्वप्नमध्ये, यदि मम पतिभावो राघवादन्यपुंसि ।
तदिह दह शरीरं पावक पावकेदं, सुकृतविकृतभाजां येन लोकैकसाक्ष्यः ॥ १४ ॥

## ६२ भावः

शिवेकुवनसारिणीं प्रशमशर्मसंजीवनीं, भवार्णवमहातरीं मदनदावमेघावलीम् ।
चलाक्षमृगवागुरां गुरुकषायशैलाशनिं, विमुक्तिपथवेसरीं भजत भावनां किं परैः ॥ १ ॥ सिं. श्लो. ८७
दानशीलतपःसंपद्भावेन भजते फलम् । स्वादुः प्रादुर्भवेद्भोज्ये, किं नाम लवणं विना ॥२॥ सू. पृ. २०९ श्लो.८
भावस्यैकाङ्गवीरस्य, सान्निध्याद्भवः शिवम् । ययुर्नैकोऽपि दानाद्यैर्भावहीनैर्धनैरपि ॥ ३ ॥ सू. पृ.२०९ श्लो.९
क्रियाशून्यस्य यो भावो भावशून्या च या क्रिया । अनयोरन्तरं दृष्टं, भानुखद्योतयोरिव ॥ ४ ॥ ज्ञानसार
देवे तीर्थे तथा मन्त्रे, दैवज्ञे भेषजे गुरौ । यादृशी भावना यस्य, सिद्धिर्भवति तादृशी ॥ ५ ॥
भव्यैश्च भावना कार्या, भरतेश्वरवद्यथा । फलन्ति दानशिलाद्या वृष्टया यथेह पादपाः ॥ ६ ॥ हिं. भा. श्लो. १
सर्वतो देशतश्चैव, विरतिः सफला तथा । यदा भावयुता लोके, स्वर्गमोक्षसुखप्रदा ॥ ७ ॥ हिं. भा. श्लो. ४
सर्वं ज्ञीप्सति पुण्यमीप्सति दयां, धित्सत्यघं भित्सति । क्रोधं दित्सति दानशीलतपसां साफल्यमादित्सति ।
कल्याणोपचयं चिकीर्षति भवांभोधेस्तटं लिप्सति । मुक्तिस्त्रिं परिरिप्सते यदि जनस्तद् भावयेद् भावनाम् ॥८॥ सिं.श्लो.८६
षट्खंडराज्ये भरतो निमग्नस्तांबूलवक्त्रः सविभूषणश्च । आदर्शहर्म्ये जटिते सुरत्नैर्ज्ञानं स लेभे वरभावतोऽत्र ॥९॥ हिं. श्लो.५
दानं तपस्तथा शीलं, नृणां भावेन वर्जितम् । अर्थहानिस्तथा पीडा, कायक्लेशश्च केवलं ॥ १० ॥ सु. श्लो. १२०
सत्त्वेषु मैत्रीं गुणिषु प्रमोदं, क्लिष्टेषु जीवेषु कृपापरत्वम् । माध्यस्थ्यभावं विपरीतवृत्तौ, सदा ममात्मा विदधातु देव ! ॥११॥
सुभाषितसंग्रह श्लो. ५३५

निर्जराकरणे बाह्याच्छ्रेष्ठमाभ्यन्तरं तपः । तत्राप्येकातपत्रत्वं, ध्यानस्य मुनयो जगुः ॥ ९ ॥

यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते, कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति ।
उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यत्कर्मणां, स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम् ? ॥ १० ॥
सिंदूरप्रकरण, श्लोक ८२

जिनेन्द्रचन्द्रोदितमस्तदूषणं, कषायमुक्तं विदधाति यस्तपः ।
न दुर्लभं तस्य समस्तविष्टपे, प्रजायते वस्तु मनोज्ञमीप्सितम् ॥ ११ ॥ सुभाषितरत्नसन्दोह श्लोक ८९९

विरज्य विषयेभ्यो यैस्तेपे मोक्षफलं तपः । तैरेव फलमङ्गस्य. जगृहे तत्त्ववेदिभिः ॥ १२ ॥

श्रीमद्वीरजिनो दृढप्रहरणः स्वीयप्रतिज्ञादृढः, श्लाघ्यो बाहुबली बलोऽप्यविचलः सन्नन्दिषेणव्रती ।
आनन्दः सदुपासको व्रतरुचिः सा सुन्दरीत्यादयः, कर्मोन्मूलनकोविदेन तपसा देवासुरैर्वन्दिताः ॥ १३ ॥

पूजालाभप्रसिद्ध्यर्थं, तपस्तप्येत योऽल्पधीः । शोष एव शरीरस्य, न तस्य तपसः फलम् ॥ १४ ॥ सूक्त. पृ. ८०

ज्ञानमेव बुधाः प्राहुः कर्मणां तापनात्तपः । तदाभ्यन्तरमेवेष्टं बाह्यं तदुपबृंहकम् ॥ १५ ॥

यत्र ब्रह्म जिनार्चा च कषयणां तथा हृतिः । सानुबन्धा जिनाज्ञा च तत्तपः शुद्धमिष्यते ॥ १६ ॥

तदेव हि तपः कार्यं दुर्ध्यानं यत्र नो भवेत् । येन योगा न हीयन्ते क्षीयन्ते नेन्द्रियाणि वा ॥ १७ ॥

चक्रे तीर्थंकरैः स्वयं निजगदे तैरेव तीर्थेश्वरैः, श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारणम् ।
सद्यो विघ्नहरं हृषीकदमनं मांगल्यमिष्टार्थकृत्, देवाकर्षणमारदर्पदलनं तस्माद्विधेयं तपः ॥ १८ ॥ सु. श्लो. ११६

आत्माऽज्ञानभवं दुःखमात्मज्ञानेन हन्यते । तपसाऽप्यात्मविज्ञानहीनैश्छेत्तुं न शक्यते ॥ ५ ॥
अयमात्मैव चिद्रूपः, शरीरी कर्मयोगतः । ध्यानाग्निदग्धकर्मा तु, सिद्धात्मा स्यान्निरंजनः ॥६ ॥
अयमात्मैव संसारः, कषायेन्द्रियनिर्जितः । तमेव तद्विजेतारं, मोक्षमाहुर्मनीषिणः ॥ ७ ॥
स्युः कषायाः क्रोधमानमायालोभाः शरीरिणाम् । चतुर्विधास्ते प्रत्येकं, भेदैः संज्वलनादिभिः ॥ ८ ॥
पक्षं संज्वलनः प्रत्या–ख्यानो मासचतुष्टयम् । अप्रत्याख्यानको वर्षं, जन्मानन्तानुबन्धकः ॥ ९ ॥
वीतरागयतिश्राद्धसम्यग्दृष्टित्वघातकाः । ते देवत्वमनुष्यत्वतिर्यक्त्वनरकप्रदाः ॥ १० ॥

## ६४ क्रोधः

हरत्येकदिनेनैव, तेजः षाण्मासिकं ज्वरः । क्रोधः पुनः क्षणेनापि, पूर्वकोट्यार्जित तपः ॥ १ ॥
क्रोधः परितापकरः, सर्वस्योद्वेगकारकः क्रोधः । वैरानुषंगजनकः क्रोधः क्रोध सुगतिहन्ता ॥२ ॥ प्रशमरति श्लो. २३
क्षमी यत्कुरुते कार्यं, न तत्क्रोधवशंवदः । कार्यस्य साधनी प्रज्ञा, सा च क्रोधेन नश्यति ॥३॥ सु. पृ. २११ श्लो. १३
मासोपवासनिरतोऽस्तु तनोतु सत्यं, ध्यानं करोतु विदधातु बहिर्निवासम् ॥
ब्रह्मव्रतं धरतु भैक्ष्यरतोऽस्तु नित्यं, रोषं करोति यदि सर्वमनर्थकं तत् ॥ ४ ॥ सुभाषितरत्नसंदोह श्लो. २९
जीवोपतापकः क्रोधः, क्रोधो वैरस्य कारणम् । दुर्गतेर्वर्तनी क्रोधः, क्रोधः शमसुखार्गला ॥५॥ यो. प्र० ४ श्लो. ९
अवश्यं नाशिनो बाह्य–स्याङ्गस्यास्य कृते ततः । कोपः कार्यो नान्तरङ्ग–ध्रुवधर्मधनापहः ॥६॥ उ. सू. टी. पृ. ६,

जा दव्वे होइ मइ अहवा, तरुणीपु रूववंतीसु । सा जइ जिणवरधम्मे, करयलमज्झे ठिआ सिद्धी ॥ १२॥
भावो धर्मस्य हृन्मित्रं, भावः कर्मेन्धनानलः । सत्कृत्यान्ने घृतं भावो, भावो वेत्री शिवश्रियः ॥ १३ ॥
वित्तेन दीयते दानं, शीलं सत्त्वेन पाल्यते । तपोऽपि तप्यते कष्टात्स्वाधीनोत्तमभावना ॥ १४ ॥
चक्री श्रीभरतो बलानुगमृगः श्रेयानिलापुत्रको, जीर्णश्रेष्ठिमृगावतीगृहपतिर्यौ भावदेवाभिधः ।
सा श्लाघ्या मरुदेवता नवमुनिः श्रीचण्डरुद्रस्य चे—त्याद्याः कस्य न चित्रकारिचरिता भावेन संभूषिताः॥१५॥ स्व पृ.८१
यन्मयोपार्जितं पुण्यं, जिनशासनसेवया । जिनशासनसेवैव, तेन मेऽस्तु भवे भवे ॥ १६ ॥
सुखस्य दुःखस्य न कोऽपि दाता, परो ददातीति कुबुद्धिरेषा ।
पुराकृतं कर्म तदेव भुज्यते, शरीर ! हे ! निस्तर यत्त्वया कृतम् ॥ १७ ॥
शत्रुर्दहति संयोगे, वियोगे मित्रमप्यहो ! । उभयोर्दुःखदायित्वात् को भेदः शत्रुमित्रयोः ॥१८॥ सु. पृ. २८ श्लो.२-३-४

## ६३ कषायदमनीभावना

चतुर्वर्गेऽग्रणीर्मोक्षो, योगस्तस्य च कारणम् । ज्ञानश्रद्धानचारित्र—रूपं रत्नत्रयं च सः ॥ १ ॥
तत्त्वानुगा मतिर्ज्ञानं, सम्यक्श्रद्धा तु दर्शनम् । सर्वसावद्ययोगानां, त्यागश्चारित्रमिष्यते ॥ २ ॥
आत्मैव दर्शनज्ञान—चारित्राण्यथवा यतेः । यत्तदात्मक एवैष, शरीरमधितिष्ठति ॥ ३ ॥
आत्मनमात्मना वेत्ति, मोहत्यागाद्य आत्मनि । तदेव तस्य चारित्रं, तद् ज्ञानं तच्च दर्शनम् ॥ ४ ॥

अहंकारो हि लोकानां, नाशाय न तु वृद्धये। यथा विनाशकाले स्यात्, प्रदीपस्य शिखोज्ज्वला ॥३॥ त. श्लो. २९८

श्रुतशीलविनयसंदूषणस्य, धर्मार्थकामविघ्नस्य। मानस्य कोऽवकाशं, मुहूर्तमपि पण्डितो दद्यात्? ॥४॥ प्र. श्लो. २७

मा कुरु धनजनयौवनगर्वं, हरति निमेषात् कालः सर्वम्। मायामयमिदमखिलं हित्वा, ब्रह्मपदं प्रविशाशु विदित्वा ॥५॥

मोहमुद्गर [शंकराचार्य] श्लो. ५

सम्पूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नूनम्।

विद्वान् कुलीनो न करोति गर्वं, गुणैर्विहीना बहु जल्पयन्ति ॥ ६ ॥ हितोपदेश, पृ० १३ श्लो. १९

जातिलाभकुलैश्वर्यबलरूपतपः श्रुतैः। कुर्वन् मदं पुनस्तानि, हीनानि लभते जनः ॥ ७ ॥ यो. प्र० ४ श्लो० १३

ज्ञानं मददर्पहरं माद्यति यस्तेन तस्य को वैद्यः। अमृतं यस्य विषायति, तस्य चिकित्सा कथं क्रियते ॥ ८ ॥

विद्ययैव मदो येषां, कार्पण्यं विभवे सति। तेषां दैवाभिभूतानां, सलिलादग्निरुत्थितः ॥ ९ ॥

अहंकारे सति प्रौढे, वदत्येवं गुणावली। अहं कारे पतिष्यामि, समायाता त्वदंतिकम् ॥ १० ॥

सा विद्या या मदं हन्ति, सा श्रीर्याऽर्थिषु दीयते। धर्मानुसारिणी या च, सा बुद्धिरभिधीयते ॥ ११ ॥

उत्क्षिप्य टिट्टिभः पादमास्ते भङ्गभयाद्भुवः। स्वचित्तकल्पितो गर्वः, माणिनां क्वोपयुज्यते ॥ १२ ॥ सूक्त. पृ. ३८

असूनृतस्य जननी परशुः शीलशाखिनः जन्मभूमिरविद्यानां माया दुर्गतिकरणम् ॥१२॥ यो० प्र० ४, श्लो० १९

दम्भो मुक्तिलतावह्नि—र्दम्भो राहुः क्रियाविधौ। दौर्भाग्यकारणं दम्भो, दम्भोऽध्यात्मसुखार्गला ॥ १३ ॥

दम्भेन व्रतमास्थाय, यो वाञ्छति परं पदम्। लोहनावं समारुह्य, सोऽब्धेः पारं यियासति ॥ १४ ॥

क्रोधो नाशयते बुद्धि–मात्मानं च कुलं धनम् । धर्मनाशो भवेत्कोपात्, तस्मात्तं परिवर्जयेत् ॥७॥ मा. अ. ७ श्लो. ५७

दुर्गतिप्रापणे पक्षो विपक्षः शुभकर्मणाम् । सपक्षः आपदः क्रोधः, स केनाद्रियते ततः? ॥८॥ हिंगुलाश.पृ० ६ श्लो. २

यो मित्रं मधुनो विकारकरणे संत्राससंपादने, सर्वस्य प्रतिबिम्बमङ्गदहने सप्तार्चिषः सोदरः ॥
चैतन्यस्य निषूदने विषतरोः सब्रह्मचारी चिरं, स क्रोधः कुशलाभिलापकुशलैः प्रोन्मूलमुन्मूल्यताम् ॥९॥ सिं. श्लो. ४५

रागं दृशोर्वपुषि कम्पमनेकरूपं, चित्ते विवेकरहितानि च चिंतितानि ।
पुंसाममार्गगमनं समदुःखजातं, कोपः करोति सहसा मदिरामदश्च ॥ १० ॥ सुभाषितरत्नसंदोह श्लो. २७

अपकारिणि कोपश्चेत्, कोपे कोपः कथं न ते ? । धर्मार्थिकाममोक्षाणां, प्रसह्य परिपन्थिनि ॥११॥ उ० पृ० २२७

ज्वलदङ्गारवद्भाति, कायः प्रायोऽतिकोपिनः । मुखे छायान्तरे दाहः, सर्वेषां भीमदर्शनं ॥ १२ ॥ हि. पृ. ६ श्लो. ३

भ्रूभंगभंगुरमुखो विकरालरूपो, रक्तेक्षणो दशनपीडितदन्तवासाः ।
त्रासं गतोऽतिमनुजो जननिंद्यवेषः, क्रोधेन कंपिततनुर्भुवि राक्षसो वा ॥ १३ ॥ सुभाषितरत्नसंदोह, श्लो. ४०

क्रोधवह्नेस्तदह्नाय, शमनाय शुभात्मभिः । श्रयणीया क्षमैकैव, संयमारामसारणिः ॥ १४ ॥ योगशास्त्र प्र. ४, श्लो. ११

## ६५ मानः माया च

विनयश्रुतशीलानां, त्रिवर्गस्य च घातकः । विवेकलोचनं लुम्पन्, मानोऽन्धङ्करणो नृणाम् ॥१॥ यो. प्र. ४ श्लो. १२

उत्सर्पयन् दोषशाखा, गुणमूलान्यधो नयन् । उन्मूलनीयो मानद्रु–स्तन्मार्दवसरित्प्लवैः ॥ २ ॥ यो. प्र. ४, श्लो. १४

धनहीनः नतमेकं, सहस्त्रं शतवानपि । सहस्राधिपतिर्लक्षं, कोटिं लक्षेश्वरोऽपि च ॥ ६ ॥

कोटिश्वरो नरेन्द्रत्वं, नरेन्द्रश्चक्रवर्तिताम् । चक्रवर्ती च देवत्वं, देवोऽपीन्द्रत्वमिच्छति ॥ ७ ॥

इन्द्रत्वेऽपि हि संप्राप्ते, यदिच्छा न निवर्तते । मूले लघीयांस्तल्लोभः, शराव इव वर्धते ॥८॥ यो. प्र.४ श्लो.१९-२०-२१

यथा लाभस्तथा लोभो, लाभाल्लोभः प्रवर्धते । माषद्वयाश्रितं कार्यं, कोट्याऽपि न हि निष्ठितम् ॥९॥ त्रि. प.१ स.३ श्लो.६

लोभाविष्टो नरो वित्तं, विक्षते न स चापदम् । दुग्धं पश्यति मार्जारो, यथा न लगुडाहतिम् ॥ १० ॥

आत्मानं धर्मकृत्यं च, पुत्रदारांश्च पीडयन् । लोभाढ्यः पितरौ भ्रातॄन्, स कृपण इति स्मृतः ॥ ११ ॥

दातारं कृपणं मन्ये, मृत्वाऽप्यर्थं न मुञ्चति । अदाता हि धनत्यागी, धनं हित्वा हि गच्छति ॥ १२ ॥

संगात् संजायते गृद्धिर्गृद्धो वांछति संचयम् । संचयात् वर्धते लोभो, लोभात्संसृतिवर्धनम् ॥१३ ॥ त. श्लो. २३४

जहा लाहो तहा लोहो लाहा लोहो पवड्ढइ। दोमासकणयकज्जं, कोडीए वि न निट्ठयं ॥१४॥ सूक्त. पृ.५९ श्लो.२

मूलं मोहविषद्रुमस्य सुकृताम्भोराशिकुम्भोद्भवः, क्रोधाग्नेररणिः प्रतापतरणिः प्रतापतरणिप्रच्छादने तोयदः ।

क्रीडासद्म कलेर्विवेकशशिनः स्वर्भानुरापन्नदी सिन्धुः कीर्तिलताकलापकलभो लोभः पराभूयताम् ॥१५॥ सु.पृ.५९ श्लो.८

कासिणंपि जो इमं लोयं, पडिपुण्णं दलेज्ज एगस्स । तेणापि से न संतूसे, इइ दुप्पुरए इमे आया ॥१६॥ उ. अ. गा.१६

सुवण्णरूपस्स य पव्वया भवे, सिया हु केलाससमा असंखया ।

नरस्स लुद्धस्स न तेहिं किंचि, इच्छाउ आगाससमा अणन्तया ॥ १७ ॥ उ. न. गा. ४८

सुत्यजं रसलाम्पट्यं, सुत्यजदेवभूषणम् । सुत्यजाः कामभोगाद्या, दुस्त्यजं दम्भसेवनम् ॥ १५ ॥
स्व-दोषनिह्नवो लोक-पूजा स्याद् गौरवं तथा । इयतैव कदर्थ्यन्ते, दम्भेन बत वालिशाः ॥ १६ ॥
अब्जे हिमं तनौ रोगो, वने वह्निर्दिते निशा । ग्रन्थे मौर्ख्यं कलिः सौख्ये, धर्मे दम्भउपप्लवः ॥ १७ ॥
धर्मीति ख्यातिलोभेन, प्रच्छादितनिजाश्रवः । तृणाय मन्यते विश्वं, हीनोऽपि धृतकैतवः ॥ १८ ॥
आत्मोत्कर्षात्ततो दम्भी, परेषां चापवादतः । बध्नाति कठिनं कर्म, बाधकं योगजन्मनः ॥ १९ ॥
आत्मार्थिना ततस्त्याज्यो, दम्भोऽनर्थनिबन्धनम् । शुद्धिः स्यादृजुभूतस्ये-त्यागमे प्रतिपादितम् ॥ २० ॥
अध्यात्मरतचित्तानां, दम्भः स्वल्पोऽपि नोचितः । छिद्रलेशोऽपि पोतस्य, सिन्धुं लङ्घयतामिव ॥ २१ ॥
दम्भलेशोऽपि मल्ल्यादेः, स्त्रीत्वानर्थनिबन्धनम् । अतस्तत्परिहाराय, यतितव्यं महात्मना ॥२२॥ अ. प्र. दम्भत्या०

## ६६ लोभः

सर्वेषामपि पापानां, निमित्तं लोभ एव हि । चातुर्गतिकसंसारे, भूयोभ्रमनिबन्धनम् ॥ १ ॥ ध. पृ. ४६
लोभात् क्रोधः प्रभवति, लोभात् कामः प्रजायते । लोभात् मोहश्च नाशश्च, लोभः पापस्य कारणम् ॥२ ॥ हि. मि श्लो.२७
आकरः सर्वदोषाणां, गुणग्रसनराक्षसः । कन्दो व्यसनवल्लीनां, लोभः सर्वार्थबाधकः ॥३॥ यो. प्र. ४ श्लो. १८
अहो लोभस्य साम्राज्य-मेकच्छत्रं महीतले । तरवोऽपि निधिं प्राप्य, पादैः प्रच्छादयन्ति यत् ॥ ४ ॥ प्र.४ श्लो.२
प्राप्योपशान्तमोहत्वं, क्रोधादिविजये सति । लोभांशमात्रदोषेण, पतन्ति यतयोऽपि हि ॥ ५ ॥ यो. प्र.४ श्लो.७

रक्ष्यमाणमपि स्वान्तं, समादाय मनाग् मिषम्। पिशाचा इव रागाद्या च्छलयन्ति मुहुर्मुहुः ॥३॥ यो. च. प्र. श्लो. ४७
इच्छा मूर्च्छा कामः, स्नेहो गार्ध्यं ममत्वमभिनन्द। अभिलाष इत्यनेकानि रागपर्यायवचनानि ॥४॥ प्रशमरति श्लो, १८
मनस्तत्र वचस्तत्र, जीवस्तत्रैव संवसेत्। नेत्रावलोकनं रागस्तत्र यत्रोपतिष्ठते ॥ ५ ॥ हिंगुल. रागप्रक्रम श्लो. ३
कामरागस्नेहरागावीषत्करनिवारणौ। दृष्टिरागस्तु पापीयान्, दुरुच्छेदः सतामपि ॥ ६ ॥ वी. प्र. ६, श्लो. १०

## ६९ रागः

अशक्यं रूपमद्रष्टुं, चक्षुर्गोचरमागतम्। रागद्वेषौ च यो तत्र, तौ बुधः परिवर्जयेत् ॥ १ ॥
अरिहंतेसु अ रागो, रागो साहुसु बभयारीसुं। एस पसत्थो रागो, अज्ज सरागाण साहूणं ॥ २ ॥
अक्खाण रसणी कंमाण मोहनी तह वयाण बंभवयं। गुत्तीण य मणगुत्ती, चउरो दुक्खेण जिप्पंति ॥ ३ ॥
क्व यामः कुत्र तिष्ठामः, किं कुर्मः किं न कुर्महे। रागिणश्चिन्तयन्त्येवं, नीरागाः सुखमासते ॥४॥ सू० पृ. ७२-७३
रागो य दोसोविय कम्मबीयं, कम्मं च मोहप्पभवं वयन्ति। कम्मं च जाईमरणस्स मूलं, दुक्खं च जाई मरणं वयन्ति ॥५॥
दुक्खं हयं जस्स न होइ मोहो, मोहो हओ जस्स न होइ तण्हा।
तण्हा हया जस्स न होइ लोभो लोभो, हओ जस्स न किंचणाई ॥ ६ ॥ उत्तराध्ययनसूत्र, द्वात्रिंशाध्ययनात्
ईर्ष्या रोषो दोषो द्वेषः, परिवादमत्सरासूयाः। वैरप्रचण्डनाद्या नैके द्वेषस्य पर्यायाः ॥ ७ ॥

## ६७ आशा

आशैव राक्षसी पुंसामाशैव विषमञ्जरी । आशैव जीर्णमदिरा, धिगाशा सर्वदोषभूः ॥ १ ॥

रात्रिर्गमिष्यति भविष्यति सुप्रभातं, भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः।
एवं विचिन्तयति कोशगते द्विरेके, हा हंत हंत नलिनीं गज उज्जहार ॥ २ ॥

अङ्गं गलितं पलितं मुण्डं, दशनविहीनं जातं तुण्डम् । वृद्धो याति गृहीत्वा दण्डं, तदपि न मुञ्चत्याशापिण्डम् ॥३ ॥
चर्पटमञ्जरी (शंकराचार्य) श्लो. ४

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः। धनाशा जीविताशा च, जीर्यतोऽपि न जीर्यति ॥ ४ ॥ हितोपदेश

दिनयामिन्यौ सायं प्रातः, शिशिरवसन्तौ पुनरायातः। कालः क्रीडति गच्छत्यायुः, तदपि न मुञ्चत्याशावायुः ॥५ ॥
मोहमुद्गल (शंकराचार्य) श्लो० १३

आशायाः ये दासास्ते दासाः सर्वलोकस्य । आशा दासी येषां, तेषां दासायते लोकः ॥ ६ ॥

भूशय्या भैक्षमशनं, जीर्णं वासो वनं गृहम्। तथापि निःस्पृहस्याहो चक्रिणोऽप्यधिकं सुखम् ॥७॥ ज्ञा. नि. श्लो. ७

## ६८ रागद्वेषौ

ममकाराहंकारा–वेषां मूलं पदद्वयं भवति । रागद्वेषावित्यपि, तस्यैवान्यस्तु पर्यायः ॥ १ ॥ प्रशमरति श्लो. ३१

तिष्ठेद्वायुर्द्रवेदग्निर्ज्वलेज्जलमपि क्वचित् । तथापि ग्रस्तो रागाद्यैर्नाप्तो भवितुमर्हति ॥ २ ॥ त्रि. पर्व १० श्लो. ३७

जानन्ति कामान्निखिलाः ससंज्ञा, अर्थं नरा केऽपि च केऽपि धर्मम् ।
जैनं च केचिद् गुरुदेवशुद्धं, केचित् शिवं केऽपि च केऽपि साम्यम् ॥ २ ॥ अ. ४ श्लो. २५

शत्रौ मित्रे तृणे स्त्रैणे, स्वर्णेऽश्मनि मणौ मृदि । इहामुत्र सुखे दुःखे, भवे मोक्षे समाशयः ॥३॥ त्रि. प.१०स.३ श्लो.४३

स्वागमं रागमात्रेण, द्वेषमात्रात्परागमम् । न श्रयामस्त्यजामो वा, किन्तु मध्यस्थया दृशा ॥४॥ ज्ञा. म. श्लो.७

पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥ ५ ॥ अष्टक (हरिभद्रसूरि)

न साम्येन विना ध्यानं, न ध्यानेन विना च तत् । निष्कम्पं जायते तस्माद्, द्वयमन्योऽन्यकारणम् ॥६॥ यो.च.प्र.श्लो.११४

भावनाभिरविश्रान्तमिति भावितमानसः । निर्ममः सर्वभावेषु, समत्वमवलम्बते ॥७॥ यो. च. प्र. श्लो. ११०

प्रणिहन्ति क्षणार्धेन, साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ ८ ॥ यो. च. प्र. श्लो. ५१

रे रे चित्त कथं भ्रातः, प्रधावसि पिशाचवत् । अभिन्नं पश्य चात्मानं, रागत्यागात्सुखी भव ॥ ९ ॥

## ७३ कलहः

स्तोकोऽप्यग्निर्दहत्येव, काष्टादिप्रभूतं घनम् । क्लेशलेशोऽत्र तद्वच्च, वृद्धितस्तनुदाहकः ॥ १ ॥ हि. क. श्लो. २

आत्मानं तापयेन्नित्यं, तापयेच्च परानपि । उभयोर्दुःखकृत्क्लेशो, यथोष्णरेणुका क्षितौ ॥ २ ॥ हि. क. श्लो० ४

## ७४ अभ्याख्यानम्

काचकागलदोषेण, पश्येन्नेत्रे विपर्ययम् । अभ्याख्यानं वदेज्जिह्वा, तत्र रोग क उच्यते ॥ १ ॥ हि. अ. श्लोक १

## ७० मोहः

अहं–ममेति मन्त्रोऽयं मोहस्य जगदा–न्ध्यकृत् । अयमेव हि नञः पूर्वः, प्रतिमन्त्रोऽपि मोहजित् ॥ १ ॥
शुद्धात्मद्रव्यमेवाहं, शुद्धज्ञानं गुणो मम । नान्योऽहं न ममान्ये, चेत्यदो मोहास्त्रमुल्बणम् ॥ २ ॥
यो न मुह्यति लग्नेषु, भावेष्वौदयिकादिषु । आकाशमिव पङ्केन, नाऽसौ पापेन लिप्यते ॥ ३ ॥
विकल्पचपकैरात्मा पीतमोहासवो ह्ययम् । भवोच्चतालमुत्तालप्रपञ्चमधिगच्छति ॥४॥ ज्ञान०

## ७१ ममतात्यागभावना

विषयैः किं परित्यक्तै—र्जागर्ति ममता यदि । त्यागात् कञ्चुकमात्रस्य, भुजङ्गो नहि निर्विषः ॥ १ ॥
कष्टेन हि गुणग्रामं, प्रगुणी कुरुते मुनिः । ममताराक्षसी सर्वं, भक्षयत्येकहेलया ॥ २ ॥
जन्तुकान्तं पशूकृत्य, द्रागविद्यौषधिबलात् । उपायैर्बहुभिः पत्नी, ममता क्रीडयत्यहो ॥ ३ ॥
माता पिता मे भ्राता मे, भगिनी वल्लभा च मे । पुत्राः सुता मे मित्राणि, ज्ञातयः संस्तुताश्च मे ॥ ४ ॥
जिज्ञासा च विवेकश्च, ममता नाशकावुभौ । अतस्ताभ्यां निगृह्णीया–देनामध्यात्मवैरिणीम् ॥५॥ अ. तृ० ममतात्या०



## ७२ समता

वेदा यज्ञाश्च शास्त्राणि, तपस्तीर्थानि संयमः । समतायास्तुलां नैव, यान्ति सर्वेऽपि मेलिताः ॥१॥ वि. उ.११ श्लो.७२

यदीच्छसि वशीकर्तुं, जगदेकेन कर्मणा । परापवादशंसेभ्यश्चरंतीं गां निवारय ॥ ४ ॥ उ. स्तं. ९ व्या. १३३

## ७९ मायामृषावादः

मनस्यन्यद् वचस्यन्यद् मायामृषा च सोच्यते । कदाऽपि सुखदा न स्याद्विश्वे यथा पण्यांगना ॥ १ ॥ हिं. म. श्लो. १

## ८० मिथ्यात्वम्

अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या । अधर्मे धर्मबुद्धिश्च, मिथ्यात्वं तद्विपर्ययात् ॥१॥ यो. पृ.५८ श्लो.३ (प्र. स.)

मिथ्यात्वं परमो रोगो, मिथ्यात्वं परमं तमः । मिथ्यात्वं परमः शत्रुर्मिथ्यात्वं परमं विषम् ॥ २॥ यो.पृ.५८ प्र. स.

नास्ति नित्यो न कर्ता च, न भोक्तात्मा न निर्वृतः । तदुपायश्च नेत्याहुर्मिथ्यात्वस्य पदानि षट् ॥३॥ अ. प्र.४ श्लो.६०

स्वाध्यायेन गुरोर्भक्त्या, दीक्षया तपसा तथा । येन केनोद्यमेनैव, मिथ्यात्वशल्यमुद्धरेत् ॥४॥ हिं. मि. श्लो.३

मिथ्यात्वत्यागतः शुद्धं, सम्यक्त्वं जायतेऽङ्गिनाम् । अतस्तत्परिहाराय, यतितव्यं महात्मना ॥५॥ अ. प्र.४ श्लो.५९

## ८१ क्षमा

क्षन्तव्यो मन्दबुद्धीना–मपराधो मनीषिणा । न हि सर्वत्र पाण्डित्यं, सुलभं पुरुषां क्वचित् ॥ १ ॥

नरस्याभूषणं रूपं, रूपस्याभरणं गुणः । गुणस्याभूषणं ज्ञानं, ज्ञानस्याभूषणं क्षमा ॥ २ ॥ मणिरत्नमाला श्लो० ५५

अद्विष्टः सर्वभूतानां, मैत्रः करुण एव च । निर्ममो निरहङ्कारः, समदुःखसुखः क्षमी ॥ ३ ॥ यतिधर्मसंग्रह पृ० ३०

## ७५ परद्रोहः

ताडनं छेदनं क्लेशकरणं वित्तबन्धनम् । परेषां कुरुते यत्तु, परद्रोहः स उच्यते ॥१॥ मानसो० अ० २ श्लो० ३८
पैशून्यं परवादं च, गालिदानं च तर्जनम् । मर्मोद्घाटं विधत्ते यत्, परद्रोहः स उच्यते ॥ २॥ मा० अ० २, श्लो. ३९
तस्मात् परकृतो द्रोहो यश्चातीव सुदुःसहः । तस्मान्नरकदं घोरं, परद्रोहं विवर्जयेत् ॥३॥ मानसो० अ. २ श्लो० ४१

## ७६ पैशून्यम्

अन्यस्य तापनाद्यर्थं, पैशून्यं क्रियते जनैः । स्वात्मा हि तप्यते तेन, यदुक्तं स्यात्फलं च तत् ॥ १॥ हिं. पै. श्लो. ३
दानं च विफलं नित्यं, शौर्यं तस्य निरर्थकम् । पैशून्यं केवलं चित्ते, वसेद्यस्याऽयशो भुवि ॥ २ ॥ हि. पै. श्लो. ४
दानशीलतपोभावै-रस्यैधते वृषो भुवि । यस्य मनोवचःकायैः, पैशून्यं नाभिसंश्रयेत् ॥३॥ हि. पै० श्लो० २

## ७७ रतिअरतिः

आदौ रागस्तत द्वेषस्तस्मात् क्लेशपरम्परा । तद्वदादौ रतिश्चारतिस्ततः कर्मबन्धनम् ॥ १ ॥ हिं. रति० श्लो० २

## ७८ परपरिवादः

वक्तुं नैव क्षमा जीह्वा, यदि मूकस्य तद्वरम् । परं परापवादं च, जंजप्यते न तद्वरम् ॥१॥ हि. प. श्लो.२
परपरिभवपरिवादात्मोत्कर्षाच्च बध्यते कर्म । नीचैर्गोत्रं प्रतिभवमनेकभवकोटिदुर्मोचम् ॥२॥ प्र. श्लो. १००
सर्वमदस्थानानां, मूलोद्घातार्थिना सदा यतिना । आत्मगुणैरुत्कर्षः परपरिवादश्च संत्याज्यः ॥३॥ प्र. श्लो. ९९

## ८४ संसारस्वरूपम्

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते । पीत्वा मोहमयी प्रमादमदिरामुन्मत्तभूतं जगत् ॥ १ ॥
आधिव्याधिजरामृत्युज्वालाशतसमाकुलः । प्रदीप्ताङ्गारकल्पोऽयं, संसारः सर्वदेहिनाम् ॥ २ ॥ त्रि. पर्व १, श्लो. ५५६
जन्मरोगजराशोकमृत्युदौःस्थ्याद्युपद्रवैः । व्याकुलेऽत्र भवे दुःखमेव प्रायो भवेद्विशाम् ॥ ३॥ उ० पृ० २०४ (आ.स.)
अस्मिन्नसारे संसारे, निसर्गेणातिदारुणे । अवधिर्न हि दुःखानां, यादसामिव वारिधौ ॥ ४ ॥ अमरचंद्रसूरि
स्फूर्जल्लोभकरालवक्त्रकुहरो हुङ्कारगुञ्जारवः, कामक्रोधविलोललोचनयुगो मायानखश्रेणिभाक् ।
स्वैरं यत्र स बम्भ्रमीति सततं, मोहाह्वयः केसरी, तां संसारमहाटवीं प्रतिवसन्को नाम मन्तुः सुखी ? ॥५॥ वै.श्लो.९०
इतः कामौर्वाग्निर्ज्वलति परितो दुःसह इतः, पतन्ति ग्रावाणो विषयगिरिकूटाद्विघटिताः ।
इतः क्रोधावर्तो विकृतितटिनीसङ्गमकृतः, समुद्रे संसारे तदिह न भयं कस्य भवति ॥ ६ ॥
प्रियाज्वाला यत्रोद्वमति रतिसन्तापतरला, कटाक्षान् धूमौधान् कुवलयदलश्यामलरुचीन् ।
अथाङ्गान्यङ्गाराः कृतबहुविकाराश्च विषया, दहन्त्यस्मिन् वह्नौ भववपुषि शर्म क्व सुलभम् ? ॥ ७ ॥
गले दत्वा पाशं तनयवनितास्नेहघटितं, निपीड्यन्ते यत्र प्रकृतिकृपणाः प्राणिपशवः ।
नितान्तं दुःखार्त्ता विषयविषयैर्घातकभटै-र्भवः सूनास्थानं तदहह महासाध्वसकरम् ॥ ८ ॥

धर्मस्य दया मूलं, न चाक्षमावान् दयां समाधत्ते । तस्माद्यः क्षान्तिपरः, स साधयत्युत्तमं धर्मम् ॥४॥ प्रश्न० श्लो०१६८
क्षमया क्षीयते कर्म, दुःखदं पूर्वसंचितम् । चित्तं च जायते शुद्धं, विद्वेषभयवर्जितम् ॥ ५ ॥ तत्त्वामृत श्लो० २६९
क्षमा (खड्गं) धनुः करे यस्य, दुर्जनः किं करिष्यति ? । अतृणे पतितो वह्निः, स्वयमेवोपशाम्यति ॥६॥ वृद्ध. श्लो.६३
खंती सुहाण मूलं, मूलं धम्मस्स उत्तमा खंती । हरइ महाविज्जा इव, खंती दुरियाइं सव्वाइं ॥ ७ ॥ संबोधसत्तरीप्र०
यस्य क्षान्तिमयं शस्त्रं, क्रोधाग्नेरुपशामकम् । नित्यमेव जयस्तस्य, शत्रूणामुदयः कुतः ॥ ८ ॥
ददतु ददतु गालीर्गालिमन्तो भवन्तो, वयमिह तदभावाद्गालिदानेऽप्यशक्ताः ।
जगति विदितमेतद्दीयते विद्यमानं, ददति खरविषाणं किं महात्यागिनोऽपि ॥ ९ ॥ सूक्तमुक्तावली पृ० ८२-८३

## ८२ ऋजुता

तदार्जवमहौषध्या, जगदानन्दहेतुना । जयेज्जगद्द्रोहकारीं, मायां विषधरीमिव ॥ १ ॥ यो. च. प्र. श्लो.१७
नानार्जवो विशुध्यति, न धर्ममाराधयत्यशुद्धात्मा । धर्मादृते न मोक्षो, मोक्षात्परं सुखं नान्यत् ॥ २॥ प्र. श्लो. १७०

## ८३ संतोषः

संतोषः परमं सौख्यं, संतोषः परमामृतम् । संतोषः परमं पथ्यं, संतोषः परमं हितम् ॥१॥ हिं. श्लो. १४
संतुष्टाः सुखिनो नित्य-मसंतुष्टाः सुदुःखिताः । उभयोरन्तरं ज्ञात्वा, संतोषे क्रियतां रतिः ॥२॥ त. श्लो. २४४

तैलपात्रधरो यद्वद् राधवेधोद्यतो यथा । क्रियास्वनन्यचित्तः स्याद् भवभीतस्तथा मुनिः ॥ १९ ॥ वाचकयशो. चि.

## ८५ इन्द्रियविषयस्वरूपम्

बिभेषियदि संसारान् मोक्षप्राप्तिं च काङ्क्षसि । तदेन्द्रियजयं कर्तुं, स्फोरय.स्फारपौरुषम् ॥१॥ (ज्ञानसार)
दुःखद्विट् सुखलिप्सुर्मोहान्धत्वाददृष्टगुणदोषः । यां यां करोति चेष्टां तया तया दुःखमादत्ते ॥ २ ॥
कलरिभितमधुरगान्धर्वतूर्ययोषिद्विभूषणरवाद्यैः । श्रोत्रावबद्धहृदयो हरिण इव विनाशमुपयाति ॥ ३ ॥
गतिविभ्रमेङ्गिताकारहास्यलीलाकटाक्षविक्षिप्तः । रूपावेशितचक्षुः शलभ इव विपद्यते विवशः ॥ ४ ॥
स्नानाङ्गरागवर्तिकवर्णकधूपाधिवासपटवासैः । गन्धभ्रमितमनस्को, मधुकर इव नाशमुपयाति ॥ ५ ॥
मिष्टान्नपानमांसौदनादि, मधुररसविषयगृद्धात्मा । गलयन्त्रपाशबद्धो मीन इव नाशमुपयाति ॥ ६ ॥
शयनासनसम्बाधनसुरतस्नानानुलेपनासक्तः । स्पर्शव्याकुलितमतिर्गजेन्द्र.इव बध्यते मूढः ॥ ७ ॥
एकैकविषयसङ्गाद्रागद्वेषातुरा विनष्टास्ते । किं पुनरनियमितात्मा जीवः पञ्चेन्द्रियवशार्तः ॥ ८ ॥
यस्मिन्निन्द्रियविषये शुभमशुभं वा निवेशयति भावम् । रक्तो वा द्विष्टो वा स बन्धहेतुर्भवति तस्य ॥ ९ ॥ प्रश०

## ८६ चतुर्गतिगमनागमनसूचकसूक्तानि

स्वर्गच्युतानामिह जीवलोके, चत्वारि नित्यं हृदये वसन्ति । दानप्रसंगो मधुरा च वाणी, देवार्चनं सद्गुरुसेवनं च ॥१॥

अविद्यायां रात्रौ, चरति वहते मूर्ध्नि विषयम्, कषायव्यालौघं क्षिपति विषयास्थीनि गले ।
महादोषान् दन्तान् प्रकटयति वक्रस्मरमुखो, न-विश्वासार्होऽयं, भवति भवनक्तञ्चर इति ॥ ९ ॥
जना लब्ध्वा धर्मद्रविणलवभिक्षां कथमपि, प्रयान्तो वामाक्षीस्तनविषयदुर्गस्थिति कृता ।
विलुट्यन्ते यस्यां कुसुमशरभिल्लेन बलिना, भवाख्यां नास्यामुचितमसहायस्य गमनम् ॥ १० ॥
धनं मे गेहं मे मम सुतकलत्रादिकमतो, विपर्यासादासादितविततदुःखा अपि मुहुः ।
जना यस्मिन् मिथ्या सुखमदभृताः कूटभूधना, मयोऽयं संसारस्तदिह न विवेकी प्रसजति ॥ ११ ॥
प्रियास्नेहो यस्मिन् निगडसदृशो यामिकभटो-पमः स्वीयो वर्गो धनमभिनवं बन्धनमिव ।
मदामेध्यापूर्णं व्यसनबिलसंसर्गविषमम्, भवः कारागेहं तदिह न रतिः क्वापि विदुषाम् ॥ १२ ॥
महाक्रोधो गृध्रोऽनुपरति शृगाली च चपलीला, स्मरोलूको यत्र प्रकटकटुशब्दः प्रचरति ।
प्रदीप्तः शोकाग्निस्ततमपयशो भस्म स्मरति, श्मशानं संसारस्तदभिरमणीयत्वमिह किम् ॥ १३ ॥
यस्य गम्भीरमध्यस्याऽज्ञानवज्रमयं तलम् । रुद्धा व्यसनशैलौघैः पन्थानो यत्र दुर्गमाः ॥ १४ ॥
पातालकलशा यत्र, भृता तृष्णामहानिलैः । कषायांश्चित्तसङ्कल्पवेलावृद्धिं वितन्वते ॥ १५ ॥
स्मरौर्वाग्निर्ज्वलत्यन्तर्यत्र स्नेहेन्धनः सदा । यो घोररोगशोकादि मत्स्यकच्छपसङ्कुलः ॥ १६ ॥
दुर्बुद्धिमत्सरद्रोहैर्विद्युद्दुर्वातगर्जितैः । यत्र सांयात्रिका लोकाः पतन्त्युत्पातसङ्कटे ॥ १७ ॥
ज्ञानी तस्माद्भवाम्भोधेर्नित्योद्विग्नोऽतिदारुणात् । तस्य सन्तरणोपायं सर्वयत्नेन काङ्क्षति ॥ १८ ॥

संश्लेष्यन्ते च शाल्मल्यो वज्रकंटकसंकटाः । तप्तायःपुत्रिकाः क्वापि स्मारितान्यवधूरतम् ॥ ७ ॥
छिन्नभिन्नशरीराणां भूयो मिलितवर्ष्मणाम् । नेत्राद्यंगानि कृन्यन्ते नककंकादिपक्षिभिः ॥ ८ ॥ त्रि. सं.

## ८८ दुर्जनता

हस्तौ दानविवर्जितौ श्रुतिपुटौ सारश्रुतेः द्रोहिणौ, नेत्रे साधुविलोकनेन रहिते पादौ न तीर्थं गतौ
अन्यायार्जितपूर्णमुदरं गर्वेऽथ तुंगं शिरः, रे रे जंबुक मुञ्च मुञ्च सहसा नीचस्य निन्द्यं वपुः ॥ १ ॥
विद्या विवादाय धनं मदाय, शक्तिश्च नित्यं परपीडनाय। खलस्य साधोर्विपरीतमेतत्, ज्ञानाय दानाय च रक्षणाय॥२॥
बाह्वो रुधिरमापीतं, भक्षितं मांसमूरुजम् । भागिरथ्यां पतिः क्षिप्तः, साधु साधु पतिव्रते ॥ ३ ॥
मृगमीनसज्जनानां, तृणजलसन्तोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना, निष्कारणवैरिणो जगति ॥ ४ ॥
कपिरपि च कापीशायन, मदमत्तो वृश्चिकेन संदष्टः । अपि च पिशाचग्रस्तः, किं ब्रूमो वै कृतं तस्य ॥ ५ ॥
दुर्जनेनं समं सख्यं, प्रीतिं चापि न कारयेत् । उष्णो दहति चाङ्गारः, शीतः कृष्णायते करम् ॥ ६ ॥
पश्य लक्ष्मण ! पम्पायां, बकोऽयं परमधर्मिकः । शनैर्हि मुञ्चते पादौ, जीवानामनुकम्पया ॥ ७ ॥
सहवासी विजानाति, सहवासिविचेष्टितम् । बकः किं वर्ण्यते राम ! येनाऽहं निष्कुलीकृतः ॥ ८ ॥
रत्तिंधा दीहंधा जच्चंधा मायमाणकोहंधा । कामंधा लोहंधा, इमे कमेण विसेसंधा ॥ ९ ॥

सद्धर्मः सुभगो नीरुक्, सुभगः सुनयः कविः। ख्यापयत्यात्मनः श्रीमान्, नरः स्वर्गे गमागमौ ॥२॥ वि. उ.५ श्लो.२२
निर्दम्भः स दयो दानी, दान्तो दक्षः सदा मृदुः । साधुसेवी जनोत्साही, भावी चात्र नरः पुनः ॥३॥ ध. पृ.९३ श्लो.६८
क्षुधालुता मानविहीनता च, मयातिरेकः प्रभविष्णुता च ।
मानापमाने समचित्तता च, तिर्यग्गतेरागतचिह्नमेतत् ॥ ४ ॥ क. श्लो. १०९
मायलोभक्षुधाऽऽलस्यबह्वाहारादि चेष्टितैः । तिर्यग्योनिसमुत्पत्तिं, ख्यापयत्यात्मनः पुमान् ॥५॥ वि. उ. ५ श्लो.२४
विरोधता बन्धुजनेषु नित्यं, सरोगता मूर्खजनेषु सङ्गः ।
अतीव रोषी कटुका च वाणी, नरस्य चिह्नं नरकागतस्य ॥ ६ ॥ ध. श्लो. ६३

## ८७ नारकदुःखानि

नरएसु जाइं अइकक्खडाइं दुक्खाइं परमतिक्खाइं । को वण्णेही ताइं, जीवंतो वासकोडीऽवि ॥१॥ ध. उ.
ज्वरोष्णदाहभयशोकतृष्णाकण्डूतुबुभुक्षा अपि पारवश्यम् । शीतं पुनर्नारकिणामतीव दशप्रकाराः प्रभवन्ति पीडाः ॥ २॥
तिलपीलं निपील्यन्ते, यन्त्रैस्तत्र हि केचन । दारुदारं विदार्यन्ते, क्रकचैः केऽपि दारुणैः ॥ ३ ॥
शूलतूलिकशय्यासु, शाय्यन्ते केऽपि सन्ततम् । असुरैर्वस्त्रवत् केचिदास्फाल्यन्ते शिलातले ॥ ४ ॥
पिपासिताश्च पाय्यन्ते, तप्तत्रपुरसं मुहुः । छायार्थिनो निपात्यन्ते, चासिपत्रतरोस्तले ॥५॥ त्रि. पृ.१० सु.
नरकेषूष्णशीतेषु चेत् पतेल्लोहपर्वतः । विलीयेत विशीर्येत तदा भुवनाप्नुवन् ॥ ६ ॥

शुचि मुखि ! दुराचारि ! रण्डे ! पण्डितमानिनि । असमर्थौ गृहारम्भे, समर्थौ गृहभञ्जने ॥ ३ ॥
प्रायः संप्रति कोपाया, मन्मार्गस्योपदर्शनम् । विलूननासिकस्येव, विशुद्धादर्शदर्शनम् ॥८॥ सु० पृ० १९७-१९८
श्वसुरगृहनिवासः, स्वर्गतुल्यो नराणाम्, यदि वसति विवेकी, वासराणि त्रिपञ्च ।
दधिमधुघृतलोभान्, मासयुग्मं वसेत् चेत्, स भवति खरतुल्यो, मानवो मानहीनः ॥ ९ ॥
वज्रकूटे विजयरामः, तिलतैलेन माधवः । भूमिशय्या मणिरामो, धक्काधुमेन केशवः ॥ १० ॥
उत्तमाः स्वगुणैः ख्याता, मध्यमाश्च पितुर्गुणैः । अधमा मातुलैः ख्याताः, श्वसुरैश्चाधमाधमाः ॥११॥ सु. पृ, २२५

## ९१ सप्तव्यसनानि

द्यूतं च मांसं च सुरा च वेश्या, पापर्द्धिचौर्यं परदारसेवा ।
एतानि सप्त व्यसनानि लोके, घोरातिघोरं नरकं नयन्ति ॥ १ ॥ विक्रम चरित्र, भाग २, श्लो० १३२६
द्यूताद् राज्यविनाशनं नलनृपः प्राप्तोऽथवा पाण्डवाः, मद्यात् कृष्णनृपश्च राघवपिता पापर्द्धितो दूषितः ।
मांसाच्छ्रेणिकभूपतिश्च नरके चौर्याद्विनष्टा न के, वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीमृतो रावणः ॥२॥ कुमा० पृ. ५१

## ९२ कर्मविपाकचिन्तनम्

दुःखं प्राप्य न दीनः स्यात्, सुखं प्राप्य च विस्मितः। मुनिः कर्मविपाकस्य, जानन्परवशं जगत् ॥ १ ॥
येषां भ्रूभङ्गमात्रेण, भज्यन्ते पर्वता अपि । तैरहो कर्मवैषम्ये, भूपैर्भिक्षाऽपि नाप्यते ॥ २ ॥

## ८९ जरा

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते ।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, हा कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥ १ ॥
वीक्ष्यते पलितश्रेणिर्नैव वृद्धस्य मूर्द्धनि । वृथैव जातजन्मेति, किं तु भस्म विधिर्न्यधात् ॥ २ ॥ सूक्तमुक्तावली पृ.६१

## ९० मूर्खता

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्ध, ब्रह्मापि तं न रञ्जयति ॥ १ ॥
यदा किञ्चिज्ज्ञोऽहं गज इव मदान्धः समभवं, तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं, तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ २ ॥
खादन्न गच्छामि हसन्न जल्पे, दत्तं न शोचामि कृतं नु मन्ये ।
द्वाभ्यां तृतीयो न भवामि राजन्नस्मादृशा नैव भवन्ति मूर्खाः ॥ ३ ॥
मूर्खत्वं च सखे ! ममापि रुचितं तस्मिन् यदष्टौ गुणा, निश्चिन्तो बहुभोजनोऽत्रपमना नक्तंदिवाशायकः ।
कार्याकार्यविचारणान्धबधिरो मानापमाने समः, प्रायेणाशयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ॥ ४ ॥
उपदेशो हि मूर्खाणां, प्रकोपाय न शान्तये । पयःपानं भुजङ्गानां, केवलं विषवर्द्धनम् ॥ ५ ॥
द्वौ हस्तौ द्वौ च पादौ च, दृश्यसे पुरुषाकृतिः । रे रे वानर ! मूर्खस्त्वं, गृहं किं न करोष्यपि ? ॥ ६ ॥

## १३ मृत्युः

अनुचितकार्यारम्भः, स्वजनविरोधो बलीयसा स्पर्धा । प्रमादजनविश्वासो, मृत्युद्वाराणि चत्वारि ॥१॥ हि. सु. श्लो.१५१

श्वःकार्यमद्य कुर्वीत, पूर्वाह्णे चापराह्णिकम् । न हि मृत्युः प्रतीक्षेत, कृतं चास्य न वा कृतम् ॥२॥ श्रा. पृ.९९ श्लो.२

सञ्चिततपोधनानां, नित्यं व्रतनियमसंयमरतानाम् । उत्सवभूतं मन्ये, मरणमनपराधवृत्तीनाम् ॥३॥ उमास्वातिवाचक

धीरेण कातरेणापि, मर्तव्यं खलु देहिना । तन्म्रियेत तथा धीमान्, न म्रियते यथा पुनः ॥४॥ त्रि. प.१० स.१ श्लो.२५५

जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्येऽर्थे, का तत्र परिदेवना ॥ ५ ॥

यत्र वेश्मनि नो कोऽपि, मृतः पूर्वं ततोऽधुना । भृशमानीयतां रक्षा, जीवयामो यथा तया ॥६॥ सु.पृ. १५-१६

मङ्गलैः कौतुकैर्योगै र्विद्यामन्त्रैस्तथौषधैः । न शक्ता मरणात्त्रातुं, सेन्द्रा देवगणा अपि ॥७॥ सू. पृ. १७

नो विद्या न च भैषजं न च पिता नो बान्धवा नो सुताः, नाभीष्टा कुलदेवता न जननी स्नेहानुबन्धान्विता ।
नार्थो न स्वजनो न वा परिजनः शारीरिकं नो बलं, नो शक्ताः सततं सुरासुरवराः सन्धातुमायुः क्षमाः ॥ ८ ॥

मृत्योर्बिभेषि किं बाल ! स जातं नैव मुञ्चति । अजातं नैव गृह्णाति, कुरु यत्नमजन्मनि ॥ ९ ॥

करिष्यामि करिष्यामि करिष्यामीति चिन्तानात् । मरिष्यामि मरिष्यामि मरिष्यामीति विस्मृतम् ॥१०॥ सु. २३५-२३७

जायमाणस्स जं दुक्खं, मरमाणस्स जंतुणो । तेण दुक्खेण संतत्तो, न सरइ पुव्वजाइयं ॥ ११ ॥

नित्यमित्रसमं देहं, स्वजनाः पर्वसन्निभाः, नमस्कारसमो ज्ञेयो, धर्मः परमबान्धवः ॥ १२ ॥

आरूढाः प्रशमश्रेणिं, श्रुतकेवलिनोऽपि च । भ्राम्यन्तेऽनन्तसंसारमहो दुष्टेन कर्मणा ॥ ३ ॥ वाचकश्री यशोवि० ज्ञा०

एगया देवलोएसु, नरएसु वि एगया । एगया आसुरं कायं, अहाकम्मेहिं गच्छई ॥ ४ ॥ उत्तराध्ययन तृ० गा० ३

तेणे जहा सन्धिमुहे गहीए, सकम्मुणा किच्चइ पावकारी । एवं पया पेच्च इहं च लोए, कडाण कम्माण न मुक्ख अत्थि॥५॥

संसारमावन्न परस्स अट्ठा, साहारणं जं च करेइ कम्मं ।

कम्मस्स ते तस्स उ वेयकाले, न बन्धवा बन्धवयं उवेन्ति ॥ ६ ॥ उत्तराध्ययनसूत्र, चतुर्थाध्ययन, गा० ३–४

सुतारा विक्रीता स्वजनविरहः पुत्रमरणे, विनीतायास्त्यागो रिपुबहुलदेशे च गमनम् ।

हरिचन्द्रो राजा वहति सलिलं प्रेतसदने, अवस्थाप्येकाहोऽप्यहह विषमाः कर्मगतयः ॥ ७ ॥

वैद्या वदन्ति कफपित्तमरुद्विकारं, ज्योतिर्विदो ग्रहगणादिनिमित्तदोषम् ।

भूतोपसर्गमथ मन्त्रविदो वदन्ति प्राचीन कर्म बलवन् मुनयो वदन्ति ॥ ८ ॥

जानामि पापं न च मे निवृत्ति, जानामि पुण्यं न च मे प्रवृत्तिः ।

केनापि भूतेन हृदि स्थितेन, व्यादिश्यते यत् तदहं करोमि ॥ ९ ॥ सूक्तमुक्तावलि, पृ० २० (दे० ला०)

कर्मणो हि प्रधानत्वं, किं कुर्वन्ति शुभा ग्रहाः । वसिष्ठदत्तलग्नोऽपि, रामः प्रव्रजितो वने ॥१०॥ आ. रा. श्लो. १५

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे, विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।

रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते, सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥११॥ नी. श्लो. ९२

कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥१२॥ वि० पृ. २७ (हे. जै. ग्रं.)

चुल्लगपासगधन्ने जूए रयणे अ सुविण चक्के अ । चम्मजुगे परमाणू दस दिट्ठंता मणुअलंभे ॥ ३ ॥
आर्यदेशकुलरूपबलायुर्बुद्धि बन्धुरमवाप्य नरत्वम् । धर्मकर्म न करोति जडो यः पोतमुज्झति पयोधिगतः सः ॥ ४ ॥
यः प्राप्य दुष्प्रापमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः । क्लेशप्रबन्धेन स लब्धमब्धौ, चिन्तामणिं पातयति प्रमादात् ॥५॥
स्वर्णस्थाले क्षिपति स रजः, पादशौचं विधत्ते, पीयूषेण प्रवरकरिणं वाहयत्यैन्धभारम् ।
चिन्तारत्नं विकिरति कराद्वायसोड्डायनार्थम्, यो दुष्प्रापं गमयति मुधा मर्त्यजन्म प्रमत्तः ॥ ६ ॥
कुसग्गे जह ओसबिन्दुए थोवं चिठ्ठइ लंबमाणए । एवं मणुआण जीवियं, समयं गोयम मा पमायए ॥ ७ ॥
दुल्लहे खलु माणुसे भवे, चिरकालेण वि सव्वपाणिणं । गाढो य विवाग कम्मुणो समयं गोयम मा पमायए ॥८॥ गा.२,४
चत्तारि परमंगाणि दुल्लहाणीह जन्तुणो । माणुसत्तं सुई सद्धा संजमम्मि य विरियं ॥ ९ ॥ उ. अ. ३ गा. १

## ९६ धर्मोद्यमः

अनित्यानि शरीराणि, विभवो नैव शाश्वतः । नित्यं संनिहितो मृत्युः, कर्तव्यो धर्मसंग्रहः ॥ १ ॥
अङ्कस्थाने भवेद्धर्मं, शून्यस्थानं ततः परम् । अङ्कस्थाने पुनर्भ्रष्टे, सर्वं शून्यमिदं भवेत् ॥ २ ॥
त्यज दुर्जनसंसर्गं, भज साधुसमागमम् । कुरु पुण्यमहोरात्रं, स्मर नित्यमनित्यताम् ॥ ३ ॥
आयुर्वर्षशतं नृणां परिमितं रात्र्या तदर्धीकृतं, तस्यार्द्धस्य कदाचिदर्द्धमधिकं वार्धक्यबाल्ये गतम् ।
शेषं रोगवियोगशोकमदनक्रोधादिभिर्व्याकुलस्यायुर्याति नरस्य तत्र कतमो यो धर्मकर्मणः ॥ ४ ॥

सूक्त०
२।।

इदं शरीरं परिणामदुर्बलं, पतत्यवश्यं श्लथसंधिजर्जरम् ।
किमौषधैः क्लिश्यसि ? मूढ दुर्मते ! निरामयं धर्मरसायनं पिब ।। १३ ।। सू. पृ. १३-१४

## १४ आराधना

अर्हत्सिद्धसाधुधर्मान्मंगलात्मनः । लोकोत्तमांश्च चतुरश्चतुरः सोऽस्मरत् स्वरात् ।। १ ।।
जीवाजीवादितत्त्वोपदेशकाः परमेश्वराः । बोधिप्रदाः स्वयंबुद्धा, अर्हन्तः शरणं मम ।। २ ।।
ध्यानाग्निदग्धकर्माणस्तेजोरूपा अनश्वराः । अनन्तकेवलज्ञानाः, सिद्धाश्च शरणं मम ।। ३ ।।
निरीहा निरहङ्कारा, निर्ममाः समचेतसः । महाव्रतधरा धीराः, साधवः शरणं मम ।। ४ ।।
अहिंसासूनृतास्तेयब्रह्माऽकिंचनतामयः । केवल्युपज्ञः परमो, धर्मश्च शरणं मम ।।५ ।।
अपि जन्म शतैर्यद्यदपराद्धं शरीरिषु । त्रिविधं त्रिविधेनापि, तन्निन्दामि समाहितः ।। ६ ।।
गृहिधर्मं द्वादशधा, मया पालयता कृता । ये केचिदप्यतीचारास्तान् सर्वान् व्युत्सृजाम्यहम् ।। ७ ।।
क्रोधमानमायालोभाभिभूतेन मया सदा । कृतं यद्यच्च हिंसादि, तत्त्रिधापि धिगस्तु मे ।।८।। त्रि. चे. आराधनायाः

## १५ मनुष्यभवदुर्लभत्वम्

अनर्घ्याण्यपि रत्नानि, लभ्यन्ते विभवैः सुखम् । दुर्लभो रत्नकोट्याऽपि, क्षणोऽपि मनुजायुषः ।। १ ।।
देवा विसयपसत्ता, नेरइआ विविहदुक्खसंतत्ता । तिरिआ विवेगविकला, मणुआणं धम्मसामग्गी ।। २ ।।

पच्चक्खाणं पूआ, पडिक्कमणं पोसहो परुवयारो। पंच पयारा जस्सउ न पयारो तस्स संसारो ॥ ८ ॥ सूक्त. प्र.
अप्पा चेव दमेयव्वो, अप्पा हु खलु दुद्दमो। अप्पा दन्तो सुही होइ, अस्सिं लोए परत्थे य ॥ ९ ॥
वरं मे अप्पा दन्तो, संजमेण तवेण य। माहं परेहिं दम्मन्तो बन्धणेहिं वहेहि य ॥ १० ॥ उ. प्र. श्लो. १५-१६
अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ११ ॥
मज्जं विसय कसाया निद्दा विकहा य पंचमी भणिया। ए ए पंच पमाया जीवं पाडन्ति संसारे ॥ १२ ॥
मिथ्यात्वाविरतिप्रमादकषाययोगान् आत्मन् सदा संवृणु सौख्यमिच्छन्।
असंवृता यद् भवतापमेपते सुसंवृता मुक्तिरमां च दद्युः ॥ १३ ॥
अकर्तव्यं न कर्तव्यं, प्राणैः कण्ठगतैरपि। सुकर्तव्यं तु कर्तव्यं, प्राणैः कण्ठगतैरपि ॥ १४ ॥
राजदण्डभयात्पापं, नाचरत्यधमो जनः। परलोकभयान्मध्यः, स्वभावादेव चोत्तमः ॥ १५ ॥
यत्नेन पापानि समाचरन्ति, धर्मं प्रसङ्गादपि नाचरन्ति। आश्चर्यमेतद्धि मनुष्यलोके, क्षीरं परित्यज्य विषं पिबन्ति ॥१६॥
धर्मस्य फलमिच्छति, धर्मं नेच्छन्ति मानवाः। फलं पापस्य नेच्छन्ति, पापं कुर्वन्ति सादराः ॥ १७ ॥
स्वर्गच्युतानामिह जीवलोके, चत्वारि नित्यं हृदये वसन्ति। दानप्रसङ्गो विमला च वाणी, देवार्चनं सद्गुरुसेवनं च॥१८॥ पृ.११

## ९८ बुद्धिः

अनारम्भो हि कार्याणां, प्रथमं बुद्धिलक्षणम्। आरब्धस्यान्तगमनं, द्वितीयं बुद्धिलक्षणम् ॥१॥ पं. पृ.९७ श्लो.११४

बालः प्रायो रमणाऽऽसक्तस्तरुणः प्रायो रमणीरक्तः । वृद्धः प्रायश्चिन्तामग्नस्तदहो धर्मे कोऽपि न लग्नः ॥५॥ सू. ष.

## १७ धर्मोपदेशः

दानं वित्ताहृतं वाचः, कीर्तिधर्मौ तथाऽऽयुषः । परोपकरणं कायादसारात्सारमुद्धरेत् ॥ १ ॥

बुद्धेः फलं तत्त्वविचारणं च, देहस्य सारं व्रतधारणं च । अर्थस्य सारं किल पात्रदानं, वाचः फलं कीर्तिकरं नराणाम् ॥२॥

जिनेन्द्रपूजा गुरुपर्युपास्तिः, सत्त्वानुकम्पा शुभपात्रदानम् । गुणानुरागः श्रुतिरागमस्य, नृजन्मवृक्षस्य फलान्यमूनि ॥ ३ ॥

पिता योगाभ्यासो विषयविरतिः सा च जननी, विवेकः सोदर्यः प्रतिदिनमनीहा च भगिनी ।
प्रिया क्षान्तिः पुत्रो विनय उपकारः प्रियसुहृत्, सहायो वैराग्यं गृहमुपशमो यस्य स सुखी ॥ ४ ॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणमनं, मुखे सत्या वाणी श्रुतमवितथं च श्रवणयोः ।
हृदि स्वच्छा वृत्तिर्विजयि भुजयोः पौरुषमहो, विनाऽप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ५ ॥

जन्तूनामवनं जिनेशमहनं भक्त्यागमाऽऽकर्णनं, साधूनां नमनं मदापनयनं सम्यग्गुरोर्माननम् ।
मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनम्, चेतः शोधनमिन्द्रियार्थदमनं यत्तत् शिवोपायनम् ॥ ६ ॥

त्रैकाल्यं जिनपूजनं प्रतिदिनं सङ्घस्य सन्माननं, स्वाध्यायो गुरुसेवनं च विधिना दानं तथाऽऽवश्यकम् ।
शक्त्या च व्रतपालनं वरतपो, ज्ञानस्य पाठस्तथा, सैष श्रावकपुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ ७ ॥

जत्थ य विसयविराओ, कसायचाओ गुणेसु अणुराओ । किरिआसु अप्पमाओ, सो धम्मो सिवसुहोवाओ ॥

अलसो मन्दबुद्धिश्च, सुखितो व्याधितस्तथा । निद्रालुः कामुकश्चेति, षडेते शास्त्रवर्जिताः ॥४॥ सू. पृ० ३९
विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं, विद्या राजसु पूजिता न हि धनं विद्याविहीनः पशुः ॥ ५ ॥
जहा खवरो चंदणभारवाही, भारस्स भागी न हु चंदणस्स ।
एवं खु नाणी चरणेन हीणो, नाणस्स भागी न हु सुग्गईए ॥ ६ ॥ सूक्तमुक्तावली पृ० ४०

## १०० पुण्यम्

दाने शक्तिः श्रुते भक्तिर्गुरूपास्तिर्गुणे रतिः । दमे मतिर्दयावृत्तिः, षडमी सुकृताङ्कुराः ॥१॥ सू० पृ.४१, श्लो.४४०
जैनो धर्मः कुले जन्म, शुभ्रा कीर्तिः शुभा मतिः । गुणे रागः श्रियां त्यागः, पूर्वपुण्यैरवाप्यते ॥२॥ सू० श्लो. ४९१
जैनो धर्मः प्रकटविभवः सङ्गतिः साधुलोके, विद्वद्गोष्ठिर्वचनपटुता कौशलं सत्क्रियासु ॥
साध्वी लक्ष्मीश्चरणकमलोपासनं सद्गुरूणां, शुद्धं शीलं सुमतिरमला प्राप्यते नाल्पपुण्यैः ॥३॥ सू० पृ. २, श्लो. ९

## १०१ पापम्

भवेयुः प्राणिनः पापात्, कासश्वासज्वरादयः । सखायोऽपि कदर्यांश्च, नागश्रीवन्महीतले ॥१॥ हिं० पा० श्लो. १
हिंसाऽनृतादयः पञ्च, तत्त्वाश्रद्धानमेव च । क्रोधादयश्च चत्वार इति पापस्य हेतवः ॥ २ ॥

प्रज्ञाऽङ्गना सदा सेव्या, पुरुषेण सुखावहा । हेयोपादेयतत्त्वज्ञा, या रता सर्वकर्मणि ॥ २ ॥ त. श्लो. २६०
सा प्रज्ञा या शमे याति, विनियोगपरा हिता । शेषा हि निर्दया प्रज्ञा, कर्मोपार्जनकारिणी ॥३॥ त. श्लो० २५९
जीवन्ति शतशः प्राज्ञाः, प्रज्ञया वित्तसंक्षये । न हि प्रज्ञाक्षये कश्चिद् वित्ते सत्यपि जीवति ॥४॥ ध. प्र. प,१८ आ. स०
अभ्यासेन क्रियाः सर्वा, अभ्यासात् सकलाःकलाः । अभ्यासाद् ध्यानमौनादि, किमभ्यासस्य दुष्करम्॥५॥ श्रा. पृ.३८
यस्य नास्ति स्वयं प्रज्ञा, शास्त्रं तस्य करोति किम्? । लोचनाभ्यां विहीनस्य, दर्पणः किं करिष्यति ? ॥६॥चा.अ.१० श्लो.९
न निर्मिता केन न दृष्टपूर्वा, न श्रूयते हेममयी कुरङ्गी । तथाऽपि तृष्णा रघुनन्दनस्य, विनाशकाले विपरीतबुद्धिः ॥७॥
असम्भवं हेममृगस्य जन्म, तथाऽपि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले, धियोऽपि पुंसां मलिनी भवन्ति ॥ ८ ॥ हितोपदेश, मित्रलाभ श्लो. २८
शुश्रूषा श्रवणं चैव, ग्रहणं धारणं तथा । ऊहाऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥९॥ यो. पृ० ५३ (प्र० स०)

## ९९ विद्या

गतेऽपि वयसि ग्राह्या, विद्या सर्वात्मना भृशम् । यदीह फलदा न स्यात् , सुलभा साऽन्यजन्मनि ॥ १ ॥
सन्तोषस्त्रिषु कर्तव्यः, स्वदारे भोजने धने । त्रिषु चैव न कर्तव्यो, दाने चाध्ययने तपे ॥ २ ॥
आरोग्यबुद्धिविनयोद्यमशास्त्ररागाः, पञ्चान्तराः पठनसिद्धगुणा भवन्ति ।
आचार्यपुस्तकनिवाससहायद्रव्यं, बाह्याश्च पञ्च पठनं परिवर्द्धयन्ति ॥ ३ ॥

शर्मं नयति भूतानि, यः शक्तो देशनाविधौ । द्रव्यादिलब्धियुक्तो यः, प्रत्यहं तस्य निर्जरा ॥ ६ ॥ त. श्लो. २६४

## १०५ बन्धः

सकषायतया जीवः, कर्मयोग्यांस्तु पुद्गलान् । यदादत्ते स बन्धः स्याज्जीवास्वातन्त्र्यकारणम् ॥१॥ यो. पृ.३८ श्लो. ५९
संवरस्तन्निरोधेन, तथा जीवस्य कर्मणा। यः सम्बन्धस्तयोरैक्यं, स बन्धस्तत् प्रकीर्तितः ॥२॥ पा. सर्ग ३, श्लो.१०५६

## १०६ विनयः

विणओ सासणे मूलं, विणओ संजओ भवे। विणयाओ विप्पमुक्कस्स, कओ धम्मो कओ तवो ? ॥१॥ सु. श्लो. ९७
विनयफलं शुश्रूषा गुरुशुश्रूषा फलं श्रुतज्ञानम् । ज्ञानस्य फलं विरतिर्विरतिफलं चाश्रवनिरोधः ॥ २ ॥
संवरफलं तपो बलमथ तपसो निर्जराफलं दृष्टम् । तस्मात् क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥ ३ ॥
योगनिरोधाद् भवसन्ततिक्षयस्सन्ततिक्षयान्मोक्षः । तस्मात् कल्याणानां सर्वेषां भाजनं विनयः ॥ ४ ॥ प्र. श्लो. ७२-७३-७४

## १०७ स्वाध्यायः

स्वध्यायगुणने यत्नः, सदा कार्यों मनीषिभिः । कोटिदानादपि श्रेष्ठ, स्वाध्यायस्य फलं यतः ॥१॥ उ. प.१५ श्लो.९
स्वाध्यायः पञ्चधा ज्ञेयो, वाचना पृच्छना तथा । परावृत्तिरनुप्रेक्षा, धर्मसम्बन्धिनी कथा ॥२॥ उ. प.१५ श्लो.५
वाचना तु गुरूपान्ते ऽध्ययनं विनयेन यत् । प्रच्छनाऽधीतशास्त्रान्तर्गत संशयनिर्णयः ॥३॥ उ. प.१५ श्लो. ६

विपरीतास्तु धर्मस्य, एत एवोदिता बुधैः । एतेपु सततं यत्नः, सम्यक्कार्यः सुखैपिणा ॥ ३ ॥ शास्त्र० श्लो. ४–५
अत्युग्रपुण्यपापानामिहैव फलमाप्यते । त्रिभिर्वर्पैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ॥ ४ ॥ सू० अ० श्लो. ५

## १०२ आश्रवः

मनोवाक्कायकर्माणि, योगाः कर्म शुभाशुभम् । यदाश्रवन्ति जन्तूनामाश्रवास्तेन कीर्तिताः ॥१॥ यो० प्र० श्लो. ७४
कपाया विपया योगाः प्रमादाविरती तथा । मिथ्यात्वमार्तरौद्रे चेत्यशुभं प्रतिहेतवः ॥२॥ यो० प्र० ४, श्लो. ७८

## १०३ संवरः

सर्वेषामाश्रवाणां तु, निरोधः संवरः स्मृतः । स पुनर्भिद्यते द्वेधा, द्रव्यभावविभेदतः ॥ १ ॥ यो० प्र० श्लो. ७९
यः कर्मपुद्गलादानच्छेदः स द्रव्यसंवरः । भवहेतुक्रियात्यागः स पुनर्भावसंवरः ॥ ३ ॥ यो० प्र० ४ श्लो. ८०

## १०४ निर्जरा

सदोपमपि दीप्तेन, सुवर्णं वह्निना यथा । तपोऽग्निना तप्यमानस्तथा जीवो विशुध्यति ॥ १ ॥ यो. प्र. ४ श्लो. ८८
ज्ञेया सकामा यमिनामकामा त्वन्यदेहिनाम् । कर्मणां फलवत् पाको यदुपायात् स्वतोऽपि हि ॥२॥ यो. प्र. ४ श्लो.८७
संसारबीजभूतानां, कर्मणां जरणादिह । निर्जरा सा स्मृता द्वेधा, सकामा कामवर्जिता ॥३॥ यो० प्र० ४ श्लो. ८६
अकामनिर्जरारूपात्, पुण्याज्जन्तोः प्रजायते । स्थावरत्वात् त्रसत्वं वा, तिर्यक्त्वं वा कथञ्चन ॥५॥ यो. प्र. श्लो. १०७

चत्तपुत्तकलत्तस्स निव्वावारस्स भिक्खुणो। पियं न विज्जई किंचि अप्पियंपि न विज्जई ॥ ५ ॥
पागारं कारइत्ताणं गोपुरट्टालगाणि य। उस्सूलए सयग्घी य तओ गच्छसि खत्तिया ॥ ६ ॥
सद्धं नगरिं किच्चा तवसंवरमग्गलं। खन्ती निउणपागारं, तिगुत्तं दुप्पधंसयं ॥ ७ ॥
धणुं परक्कमं किच्चा, जीवं च इरियं सया। धिइं च केयणं किच्चा, सच्चेण पलिमन्थए ॥ ८ ॥
तवनारायजुत्तेण, भेत्तूणं कम्मकंचुयं। मुणी विगयसंगामो, भवाओ परिमुच्चति ॥ ९ ॥
जो सहस्सं सहस्साणं, संगामे दुज्जए जिणे। एगं जिणेज्ज अप्पाणं एस मे परमो जओ ॥ १० ॥
अप्पाणमेव जुज्झाहि किं ते जुज्झेण बज्झओ। अप्पाणमेवमप्पाणं जिणित्ता सुहमेहति ॥ ११ ॥
पंचिन्दियाणि कोहं, माणं मायं तहेव लोहं च। दुज्जयं चेव अप्पाणं, सव्वं अप्पे जिए जियं ॥ १२ ॥
मासे मासे तु जो बालो, कुसग्गेणं तु भुंजइ। न सो सुक्खायस्स धम्मस्स, कलं अग्घइ सोलसिं ॥१३॥ उ० नवमाध्य०

## ११० केसिगोयमीयसंवादः

अणेगाण सहस्साणं मज्झे चिट्ठसि गोयमा। ते अ ते अभिगच्छन्ति कहं ते निज्जिया तुमे ॥ १ ॥
एगे जिए जिया पंच, पंच जिए जिया दस। दसहा उ जिणित्ताणं, सव्वसत्तू जिणामहं ॥ २ ॥
एगप्पो अजिए सत्तू, कसाया इंदियाणि य। ते जिणित्तु जहानायं, विहरामि अहं मुणी ॥ ३ ॥
दीसंति बहवे लोए, पासबद्धा सरीरिणो। मुक्कपासो लहुब्भूओ, कहं तं विहरसी मुणि ॥ ४ ॥

परावृत्तिः पुराधीतागमोच्चार पुनः पुनः । तद्विचारस्त्वनुप्रेक्षा, व्याख्या धर्मकथा भवेत् ॥४॥ उ. प.१५ श्लो. ६
श्रमणैः श्रावकैश्चापि, क्रियाकरणतत्परैः । चतुर्वारं विधातव्यः, स्वाध्यायोऽयमहर्निशम् ॥५॥ उ. प. १५ श्लो. ८

## १०८ आत्मभेदाः

बहिर्भावानतिक्रम्य, यस्याऽत्मन्याऽऽत्मनिश्चयः । सोऽन्तरात्मा मतस्तज्ज्ञैः, विभ्रमध्वान्तभास्करैः ॥ १ ॥
आत्मबुद्धिः शरीरादौ, यस्य स्यादात्मविभ्रमात् । बहिरात्मा स विज्ञेयो मोहनिद्राऽस्तचेतनः ॥ २ ॥
आत्मधिया समुपात्तः कायादिः कीर्त्यतेऽत्र बहिरात्मा । कायादिः समधिष्ठायको भवत्यन्तरात्मा तु ॥३॥ यो. प्र.१२ श्लो.१
चिद्रूपानन्दमयो निःशेषोपाधिवर्जितः शुद्धः । अत्यक्षोऽनन्तगुणः, परमात्मा कीर्तितस्तज्ज्ञैः ॥४॥ यो. प्र. ७ श्लो. ८
निर्लेपो निष्कलहः शुद्धो निष्पन्नोऽत्यन्तनिवृत्तः । निर्विकल्पश्च शुद्धात्मा, परमात्मेति निर्णितः ॥ ५ ॥

## १०९ नमिपव्वज्जा

किण्णु भो अज्ज मिहिलाए कोलाहलगसंकुला । सुण्णन्ति दारुणा सद्दा पासाएसु गिहेसु य ॥ १ ॥
मिहिलाए चेइए वच्छे सीयच्छाए मणोरमे । पत्तपुप्फलोवेए बहूणं बहूगुणे सया ॥ २ ॥
वाएण हीरमाणंमि, चेइयंमि मणोरमे । दुहिया असरणा क्षत्ता एए कन्दन्ति भो खगा ॥ ३ ॥
सुहं वसामो जीवामो, जेसि मो नत्थि किंचण । मिहिलाए डज्झमाणीए न मे डज्झइ किंचण ॥ ४ ॥

उग्गओ विमलो भाणू सव्वलोयपभंकरो । सो करीरसइ उज्जोयं सव्वलोगंमि पाणिणं ॥ ३० ॥
उग्गओ खीणसंसारो सव्वन्नू जिणभक्खरो । सो करिस्सइ उज्जोयं सव्वलोगंमि पाणिणं ॥ २१ ॥
सारीरमाणसे दुक्खे बज्झमाणाण पाणिणं । खेमं सिवमणाबाहं ठाणं, किं मन्नसि मुणी ॥२२ ॥
अत्थि एगं धुवं ठाणं लोगग्गंमि दुरारुहं । जत्थ नत्थि जरा मच्चू वाहिणो वेयणा तहा ॥ २३ ॥
निव्वणिति अबाहंति सिद्धीलगग्गमेव य । खेमं सिवं अणाबाहं, जं तरन्ति महेसिणो ॥ २४ ॥
तं ठाणं सासयं वासं लोगग्गंमि दुरारुहं । जं संपत्ता न सोयन्ति, भवोहन्तकरा मुणी ॥ २५ ॥ उ० ऋ०

## १११ नवकारसूत्रम्

जिणसासणरस सारो, चउदसपुव्वाण जो समुद्धारो । जस्स मणे नवकारो, संसारो तस्स किं कुणइ ॥ १ ॥
हिंसावाननृतप्रियः परधनहर्ता परस्त्रीरतः। किं चान्येष्वपि लोकगर्हितमहापापेषु गाढोद्यतः ।
मन्त्रेशं स यदि स्मरेदविरतं प्राणात्यये सर्वथा, दुष्कर्मार्जितदुर्गदुर्गतिरपि स्वर्गीभवेन्मानवः ॥ २ ॥
नवकार इक्कअक्खर पावं फेडेइ सत्त अयराणं । पन्नासं च पएणं पंचसयाइं समग्गेणं ॥ ३ ॥
जो गुणइ लक्खमेगं पूएइ विहीइ जिणनमुक्कारं । तित्थयरनामगोत्तं सो बंधइ नत्थि संदेहो ॥ ४ ॥
अट्ठेव य अट्ठसया, अट्ठसहस्सं च अट्ठकोडीओ । जो गुणइ भत्तिजुत्तो, सो पावइ सासयं ठाणं ॥ ५॥ स्व० पृ. ५१

ते पासे सव्वसो छित्ता, निहन्तूण उवायओ। मुक्कपासो लहुब्भूओ, विहरामि अहं मुणी ॥ ५ ॥
रागद्दोसादओ तिव्वा, नेहपासा भयंकरा। ते छिंदितु जहानायं, विहरामि जहक्कम्मं ॥ ६ ॥
अंतो हिअयसंभूया लया चिट्ठइ गोयमा। फलेइ विसभक्खीणं सा उ उद्धरिया कहं ॥ ७ ॥
तं लयं सव्वसो छित्ता उद्धरित्ता समूलियं। विहरामि जहानायं मुक्कोमि विसभक्खणं ॥ ८ ॥
भवतण्हा लया वुत्ता भीमा भीमफलोदया। तमुच्छितु जहानायं विहरामि महामुणी ॥ ९ ॥
संपज्जलिया घोरा, अग्गी चिट्ठइ गोयमा। जे डहंति सरीरत्था कहं विज्झाविया तुमे ॥ १० ॥
महामेहप्पसूयाओ गिज्झ वारि जलुत्तमं। सिंचामि सययं तेउ, सित्ता नो व डहंति मे ॥ ११ ॥
कसाया अग्गिणो वुत्ता सुयसीलतवो जलं। सुयधाराभिहया संता भिन्न हु न दहंति मे ॥ १२ ॥
अयं साहस्सिओ भीमो, दुट्ठस्सो परिधावइ। जंसि गोयम आरूढो, कहं तेण न हीरासि ॥ १३ ॥
अत्थि एगो महादीवो, वारिमज्झे महालओ। महाउदगवेगस्स, गई तत्थ न विज्जई ॥ १४ ॥
जरामरणवेगेणं वुज्झमाणाण पाणिणं। धम्मो दीवो पइट्ठा य गई सरणमुत्तमं ॥ १५ ॥
अण्णवंसि महोहंसी, नावा, विपरिधावई। जंसि गोयम मारूढो, कहं पारं गमिस्ससि ॥ १६ ॥
जा उ अस्साविणी नावा न सा पारस्स गामिणी। जा निरस्साविणी नावा, सा उ पारस्स गामिणी ॥ १७ ॥
सरीरमाहु नावत्ति, जीवो वुच्चइ नाविओ। संसारो अण्णवो वुत्तो, जं तरन्ति महेसिणो ॥ १८ ॥
अन्धयारे तमोघोरे, चिट्ठन्ति पाणिणो बहु। को करिस्सइ उज्जोयं, सव्वलोगंमि पाणिणं ॥१९॥

वचोऽनुष्ठानतोऽसङ्गक्रियासङ्गतिमङ्गति । सेयं ज्ञानक्रियाभेदभूमिरानन्दपिच्छला ॥ ८ ॥ यशोविजयविरचित ज्ञा०

## ११४ प्रायश्चित्तम्

मनोवचःकायवशादुपागतो विशोध्यते येन मलो मनीषिभिः ।
श्रुतानुरूपं मलशोधनं तपो विधीयते तद् व्रतशुद्धिहेतवे ॥ १ ॥ सुभाषितरत्नसन्दोहश्लो० ८८७
प्रतिसंवत्सरं ग्राह्यं, प्रायश्चित्तं गुरोः पुरः । शोध्यमानो भवेदात्मा, येनादर्श इवोज्ज्वलः ॥२॥ ध० पृ० ५ श्लो. ७५

## ११५ प्रतिक्रमणम्

अघनिष्क्रमणं भावद्विषदाक्रमणं च सुकृतसंक्रमणम् । मुक्तेः क्रमणं कुर्याद् द्विः प्रतिदिवसं प्रतिक्रमणम् ॥ १ ॥
पडिसिद्धाणं करणे किच्चाणमकरणेः अ पडिकमणं । असद्दहणे अ तहा विवरीअपरूवणाए अ ॥ २ ॥

## ११६ सदनुष्ठानाधिकारः

विषं गरोऽननुष्ठानं तद्धेतुरमृतं परम् । गुरुसेवाद्यनुष्ठानं, इति पञ्चविधं जगुः ॥ १ ॥
आहारोपधिपूजर्द्धिप्रभृत्याशंसया कृतम् । शीघ्रं सचित्तहन्तृत्वाद् विषानुष्ठानमुच्यते ॥ २ ॥
दिव्यभोगाभिलाषेण, कालान्तरपरिक्षयात् । स्वादृष्टफलसंपूर्तेर्गरानुष्ठानमुच्यते ॥ ३ ॥
प्रणिधानाद्यभावेन कर्मानध्यवसायिनः । संमूर्च्छिमप्रवृत्त्योपममननुष्ठानमुच्यते ॥४॥

## ११२ ज्ञान क्रिययोः सापेक्षता

हयं नाणं कियाहीणं, हया अन्नाणओ किया । पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥ १ ॥
संजोगसिद्धीइ फलं वयंति, न हु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिद्धा, ते संपउत्ता नगरं पविट्ठा ॥ २ ॥ आवश्यक नि० गा० १०२
आसन्नसिद्धिआण विहिपरिणामो होइ उ सयकालं । विहिवाओ अविहि भत्ती अभव्वजिअ दूरभव्वाणं ॥ ४ ॥
तित्थयरत्तं संमत्तं खाइअं सत्तमीइ तइआए । आउं वंदणएणं बद्धं च दसारसीहेण ॥ ५ ॥

## ११३ क्रिया

ज्ञानी क्रियापरः शान्तो भावितात्मा जितेन्द्रियः । स्वयं तीर्णो भवाम्भोधेः परांस्तारयितुं क्षमः ॥ १ ॥
क्रियाविरहितं हन्त ! ज्ञानमात्रमनर्थकम् । गतिं विना पथज्ञोऽपि नाप्नोति पुरमीप्सितम् ॥ २ ॥
स्वानुकूलां क्रियां काले, ज्ञानपूर्णोऽप्यपेक्षते । प्रदीपः स्वप्रकाशोऽपि, तैलपूर्त्यादिकं यथा ॥ ३ ॥
बाह्यभावं पुरस्कृत्य, ये क्रियाव्यवहारतः । वदने कवलक्षेपं, विना ते तृप्तिकाङ्क्षिणः ॥ ४ ॥
गुणवद्बहुमानादेर्नित्यस्मृत्या च सत्क्रिया । जातं न पातयेद्भावमजातं जनयेदपि ॥ ५ ॥
क्षायोपशमिके, भावे या क्रिया क्रियते तया । पतितस्यापि तद्भावप्रवृद्धिर्जायते पुनः ॥ ६ ॥
गुणवृद्धये ततः कुर्यात् क्रियामस्खलनाय वा । एकं तु संयमस्थानं जिनानामवतिष्ठते ॥ ७ ॥

प्रविश्य विधिना तत्र त्रिःप्रदक्षिणयेज्जिनम् । पुष्पादिभिस्तमभ्यर्च्य स्तवनैरुत्तमैः स्तुयात् ॥७॥ यो. प्र.३ श्लो. ११३
धूपं दहति पापानि दीपो मृत्युनिनाशनः । नैवेद्यैर्विपुलं राज्यं, प्रदिक्षणा शिवप्रदा ॥ ८ ॥ उ. पृ.१८८
पुष्पादिपूजा तदाज्ञा च तद्द्रव्यपरिरक्षणं । उत्सवतीर्थयात्रा च भक्तिः पञ्चधा जिने ॥ ९ ॥

## ११८ आसन्नसिद्धिजोवलक्षणानि

संसारचारए चारएव्व, आवीलियस्स बंधेहिं । उव्विग्गों जस्स मणो, सो किर आसन्नसिद्धिपहो ॥ १ ॥
आसन्नकालभवसिद्धियस्स, जीवस्स लख्खणं इणमो । विसयसुहेसु न रज्जइ, सव्वत्थामेसु उज्जमइ ॥ २॥ धर्म० उ०

## ११९ भावपूजा

दयाम्भसा कृतस्नानः, सन्तोषशुभवस्त्रभृत् । विवेकतिलकभ्राजी भावनापावनाशयः ॥ १ ॥
भक्तिश्रद्धानघुसृणोन्मिश्रकश्मीरजद्रवैः । नवब्रह्मांगतो देवं शुद्धमात्मानमर्चय ॥ २ ॥
क्षमापुष्पस्त्रजं धर्मयुग्मक्षौमद्वयं तथा । ध्यानाभरणसारं च तदङ्गे विनिवेशय ॥ ३ ॥
मदस्थानभिदात्यागैर्लिखाग्रे चाष्टमङ्गलीम् । ज्ञानाग्नौ शुभसङ्कल्पकाकतुण्डं च धूपय ॥ ४ ॥
प्राग्धर्मलवणोत्तारं धर्मसंन्यासवह्निना । कुर्वन् पूरय सामर्थ्यराजन्नीराजनाविधिम् ॥ ५ ॥
स्फुरन्मङ्गलदीपं च स्थापयानुभवं पुरः । योगनृत्यपर(स्तु)स्तौर्यत्रिकसंयमवान् भव ॥ ६ ॥
उल्लसन्मनसः सत्यघण्टां वादयतस्तव । भावपूजारतस्येत्थं करक्रोडे महोदयः ॥ ७ ॥

सदनुष्ठानरागेण तद्धेतुमार्गगामिनाम् । एतच्चचरमावर्तेऽनाभोगादेर्विना भवेत् ॥ ५ ॥
धर्मयौवनकालोऽयं भवबालदशा परा । अत्र स्यात् सत्क्रियारागोऽन्यत्र चाऽसत्क्रियादरः ॥ ६ ॥
जैनीमाज्ञां पुरस्कृत्य प्रवृत्तं चित्तशुद्धितः । संवेगगर्भमत्यन्तममृतं तद्विदो विदुः ॥ ७ ॥

## ११७ जिनपूजा

स्वर्गस्तस्य गृहांगणं सहचरी साम्राज्यलक्ष्मीः शुभा । सौभाग्यादि गुणावलिर्विलसति स्वैरं वपुर्वेश्मनि ।
संसारः सुतरः शिवं करतलक्रोडे लुठत्यंजसा, यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ॥ १ ॥
तवनियमेण य मुक्खो, दाणेण य हुंति उत्तमा भोगा । देवच्चणेण रज्जं, अणसणमरणेण इंदत्तं ॥ २ ॥
यास्याम्यायतनं जिनस्य लभते ध्यायंश्चतुर्थं फलं, षष्ठं चोत्थितुमुद्यतोऽष्टमपथो गंतुं प्रवृत्तोऽध्वनि ।
श्रद्धालुर्दशमं बहिर्जिनगृहात् प्राप्तस्ततो द्वादशं, मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलम् ॥ ३ ॥
सयं पमज्जने पुण्णं सहस्सं च विलेवणे । सयसहस्सिआ माला अणंतं गीयवाइए ॥ ४ ॥
पापं लुम्पति दुर्गतिं दलयति व्यापादयत्यापदम् । पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरोगताम् ।
वैराग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः, स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चाऽर्हतां निर्मिता ॥ ५ ॥
नौरेषा भववारिधौ शिवपदप्रासादनिःश्रेणिका, मार्गः स्वर्गपुरस्य दुर्गतिपुरद्वारप्रवेशार्गला ।
कर्मग्रन्थिशिलोच्चयस्य दलने दम्भोलिधारासमा, कल्याणैकनिकेतनं निगदिता पूजा जिनानां परा ॥६॥ पृ.५० श्लो.१७-१८

## १२३ उद्यापनम्

लक्ष्मीः कृतार्था सफलं तपोऽपि, ध्यानं सदोच्चैर्जनबोधिलाभः ।
जिनस्य भक्तिर्जिनशासने श्रीः गुणाः स्युरुद्यापनतो नराणाम् ॥ १ ॥
उद्यापनं यत्तपसः समर्थने, तच्चैत्यमौलौ कलशाधिरोपणम् । फलोपरोपोऽक्षतपात्रमस्तके, ताम्बुलदानं कृतभोजनोपरि ॥२॥

## १२४ तीर्थम्

एकाहारी भूमिसंस्तारकारी, पद्भ्यां चारी शुद्धसम्यक्त्वधारी ।
यात्राकाले सर्वसच्चित्तहारी, पुण्यात्मा स्याद् ब्रह्मचारी विवेकी ॥ १ ॥ उपदेशतरङ्गिणी पृ० २४३ (य. वि. ग्र.)
मनोविशुद्धं पुरुषस्य तीर्थं, वाक्संयमश्चेन्द्रियनिग्रहश्च । त्रीण्येव तीर्थानि शरीरभाजां, स्वर्गं च मोक्षं च निदर्शयन्ति॥२॥
आरम्भाणां निवृत्तिर्द्रविणसफलता सङ्घवात्सल्यमुच्चै–र्नैर्मल्यं दर्शनस्य प्रणयिजनहितं जीर्णचैत्यादिकृत्यम् ।
तीर्थोन्नत्यं च सम्यग् जिनवचनकृतिस्तीर्थसत्कर्मकत्वं, सिद्धेरासन्नभावः सुरनरपदवी तीर्थयात्रा फलानि ॥३॥ उ.पृ.२४२
श्रीतीर्थपान्थरजसा विरजीभवन्ति, तीर्थेषु विभ्रमणतो न भवे भ्रमन्ति ।
तीर्थव्ययादिह नराः स्थिरसम्पदः स्युः, पूज्या भवन्ति जगदीशमथार्चयन्तः ॥ ४ ॥ उपदेशतरङ्गिणी पृ. १४६

## १२५ तीर्थयात्रा

यो दृष्टो दुरितं हन्ति, प्रणतो दुर्गतिद्वयम् । संघेशार्हन्त्यपदकृत्, स जीयाद्विमलाचलः ॥ १ ॥

द्रव्यपूजोचिता भेदोपासना गृहमेधिनाम् । भावपूजा तु साधुनामभेदोपासनात्मिका ॥ ८ ॥ वा. ज्ञा.

## १२० जिनाज्ञा

आणाइ तवो आणाइ संजमो तह य दाणमाणाए । आणारहिओ धम्मो पलालपुलुव्व पडिहाइ ॥ १ ॥
एगो साहु एगा साहुणी सावओ वा सड्ढी वो । आणाजुत्तो संघो सेसो पुण अट्ठीसंघाओ ॥ २ ॥
सो हु तवो कायव्वो जेण मणो मंगुलं न चिंतेइ । जेण न इंदियहाणी जेण य जोगा न हायंति ॥३॥ सु. पृ.६३-६४
आ कालामियमाज्ञा ते हेयोपादेयगोचरा । आश्रवः सर्वथा हेयः उपादेयश्च संवरः ॥ ४॥ वीतरागस्तोत्रम्

## १२१ देवद्रव्यम्

जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । रक्खंतो जिणदव्वं, तित्थयरत्तं लहइ जीवो ॥ १ ॥
जिणपवयणवुड्ढिकरं, पभावगं नाणदंसणगुणाणं । भक्खंतो जिणदव्वं, अणंतसंसारिओ होइ ॥ २ ॥
चेइअदव्वविणासे, रिसिघाए पवयणस्स उड्डाहे । संजइ चउत्थभंगे, मूलग्गी वोहिलाभस्स ॥ ३ ॥

## १२२ उपधानम्

उपधानतपो विधिवद् विधाय, धन्यो निधाय निजकण्ठे । द्वेधाऽपि सूत्रमालां द्वेधाऽपि शिवश्रियं श्रयति ॥१॥
मुक्तिकन्यावरमाला, सुकृतजलाकर्षणे घटीमाला । साक्षादिव गुणमाला, माला परिधीयते धन्यैः ॥२॥ सु. पृ. २५२

## १२७ तीर्थंकरनामकर्मबन्धभावना

मोहान्धकारगहने, संसारे दुःखिता बत । सत्त्वाः परिभ्रमन्त्युच्चैः, सत्यस्मिन् धर्मतेजसि ॥ १ ॥
अहमेतानतः कृच्छ्रात्, यथायोगं कथंचन । अनेनोत्तारयामीति, वरबोधिसमन्वितः ॥ २ ॥
तत्तत्कल्याणयोगेन, कुर्वन् सत्यार्थमेव सः । तीर्थकृत्वमवाप्नोति, परं सत्त्वार्थसाधनम् ॥ ३ ॥
चिन्तयत्येवमेवैतत्स्वजनादिगतं तु यः । तथानुष्ठानतः सोऽपि, धीमान् गणधरो भवेत् ॥ ४ ॥
संविग्नो भवनिर्वेदात्मनिःसरणं तु यः । आत्मार्थसंप्रवृत्तोऽसौ, सदा स्यान्मुण्डकेवली ॥ ५ ॥ प० पृ० १४७ गा० १९

## १२८ शासनप्रभावकत्वं

दिदृक्षुर्भिक्षुरेकोऽस्ति, वारितो द्वारि तिष्ठति । हस्तन्यस्तचतुःश्लोको, किं वाऽऽगच्छतु गच्छतु ॥ १ ॥
दीयतां दशलक्षाणि, शासनानि चतुर्दश । हस्तन्यस्तचतुःश्लोको, यद्वाऽऽगच्छतु गच्छतु ॥ २ ॥
अपूर्वेयं धनुर्विद्या, भवता शिक्षिता कुतः । मार्गणौघः समभ्येति, गुणो याति दिगन्तरम् ॥ ३ ॥
सर्वदा सर्वदोऽसीति, मिथ्या संस्तूयसे बुधैः । नाऽरयो लेभिरे पृष्ठं, न चक्षुः परयोषितः ॥ ४ ॥
आहते तव निःस्वाने, स्फुटितं रिपु हृद्घटैः । गलिते तत्प्रियानेत्रे, राजन्! चित्रमिदं महत् ॥ ५ ॥
सरस्वती स्थिता वक्त्रे, लक्ष्मीः करसरोरुहे । कीर्तिः किं कुपिता राजन्! येन देशान्तरं गता ॥६॥ सु. पृ. १९६–१९७

शत्रुञ्जये जिने दृष्टे, दुर्गतिद्वितयं क्षिपेत् । सागराणां सहस्रं च, पूजास्नात्रविधानतः ॥ २ ॥
मिथ्यात्वगरलोद्गारः, सम्यग्दृष्टिसुधारसः । पूर्वो ह्रस्वः परो दीर्घो, नाभिनन्दनवन्दने ॥ ३ ॥
सदा शुभध्यान–संसारलक्ष्म्याः, फलं चतुर्धा सुकृताप्तिरुच्चैः ।
तीर्थोन्नतिस्तीर्थकृतां पदाप्तिर्गुणा हि यात्राप्रभवाः स्युरेते ॥ ४ ॥
वपुः पवित्रीकुरु तीर्थयात्रया, चित्तं पवित्रीकुरु धर्मवाञ्छया । वित्तं पवित्रीकुरु पात्रदानतः, कुलं पवित्रीकुरु सच्चरित्रैः॥५॥
एअं जम्मस्स फलं सारं विहवस्स इत्तिअं चेव । जं अञ्चिज्जइ गंतुं सित्तुंजे रिसहतित्थयरो ॥ ७ ॥
छट्ठेणं भत्तेणं, अपाणएणं तु सत्त जत्ताओ । जो कुणइ सित्तुंजे सो तइअभवे लहइ सिद्धिं ॥८॥ सूक्त. पृ० ५१-५२

## १२६ संघः

रत्नानामिव रोहणः क्षितिधरः खं तारकाणामिव, स्वर्गः कल्पमहीरुहामिव सरः पङ्केरुहाणामिव ।
पाथोधिः पयसां शशीव महसां स्थानं गुणानामसा–वित्यालोच्य विरच्यतां भगवतः सङ्घस्य पूजाविधिः ॥ १ ॥
कदा किल भविष्यन्ति मद्गृहाङ्गणभूमयः । श्री सङ्घचरणाम्भोजरजोराजिपवित्रितः ॥ २ ॥
यः संसार निरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते, यं तीर्थं कथयन्ति पावनतया येनास्ति नान्यः समः ।
यस्मै तीर्थपतिर्नमस्यति सतां यस्माच्छुभं जायते, स्फूर्तिर्यस्य परा वसन्ति च गुणा यस्मिन् स सङ्घोऽर्च्यताम् ॥३॥

मन एव मनुष्याणां, कारणं बन्धमोक्षयोः । बन्धस्तु विषयासंगे, मुक्तेर्निर्विषयं मनः ॥ ६ ॥
मणमरणे इंदियमरणं, इंदियमरणे मरंति कम्माइं । कम्ममरणेण मुक्खो, तम्हा मणमारणं बिंति ॥७॥ सु. श्लो. २४-२५
मनःकपिरयं विश्वपरिभ्रमणलम्पटः । नियन्त्रणीयो यत्नेन, मुक्तिमिच्छुभिरात्मनः ॥ ८ ॥ यो. प्र. ४ श्लो० ३९
चञ्चलं हि मनः कृष्णः प्रमाथि बलवद् दृढम् । तस्याहं निग्रहं मन्ये, वायोरिव सुदुष्करम् ॥ ९ ॥
असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥१०॥ भ. अ. ६, श्लो.३४-३५
मनःक्षपाचरो भ्राम्यन्नपशङ्कं निरङ्कुशः । प्रपातयति संसाराऽऽवर्तगर्ते जगत्त्रयीम् ॥ ११ ॥ यो. प्र. ४, श्लो. ३५

## १३१ मनसो भेदाः

सुविदितयोगैरिष्टं क्षिप्तं मूढं तथैव विक्षिप्तम् । एकाग्रं च निरुधं, चेतः पञ्चप्रकारमिति ॥ १ ॥
विषयेषु च कल्पितेषु च, पुरः स्थितेषु च निवेशितं रजसा । सुखदुःखयुग्बहिर्मुख-माम्नातं क्षिप्तमिह चित्तम् ॥ २ ॥
क्रोधादिभिर्नियमितं विरुद्धकृत्येषु यत्तमोमूम्ना । कृत्याकृत्यविभागा-सङ्गतमेतत्मनो मूढम् ॥ ३ ॥
सत्त्वोद्रेकात्परिहृत-दुःखनिदानेषु सुखनिदानेषु ! शब्दादिषु प्रवृत्तं, सदैव चित्तं तु विक्षिप्तम् ॥ ४ ॥
अद्वेषादिगुणवतां, नित्यं खेदादिदोषपरिहारात् । सदृशप्रत्ययसङ्गतमेकाग्रं चित्तमाम्नातम् ॥ ५ ॥
उपरतविकल्पवृत्तिकमवग्रहादिक्रमच्युतं शुद्धम् । आत्मारामगुनीनां, भवति निरुद्धं सदा चेतः ॥ ६ ॥ अ० प्र०

## १२९ लेश्या

कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्राऽयं, लेश्याशब्दः प्रवर्तते॥१॥यो. प्र. ४ श्लो०४४
ताः कृष्णनीलकपिततैजसपद्मशुक्लनामानः। श्लेष इव वर्णबन्धस्य, कर्मबन्धस्थितिविधात्र्यः ॥२॥ यो.प्र.४ श्लो० ४४
अतिरौद्रः सदा क्रोधी, मत्सरी धर्मवर्जितः। निर्दयो वैरसंयुक्तः कृष्णलेश्याधिको नरः ॥३॥ उ० भा० ४ पृ० ९०
अलसो मन्दबुद्धिश्च स्त्रीलुब्धः परवञ्चकः। कातरश्च सदा मानी, नीललेश्याधिको भवेत् ॥४॥ उ० भा. ४ पृ० ९०
विद्यावान् करुणायुक्तः, कार्याकार्यविचारकः। लाभालाभे सदा प्रीतः, पीतलेश्याऽधिको नरः॥५॥उ.भा० ४ पृ० ९१
क्षमावांश्च सदा त्यागी, देवार्चनरतो यमी। शूचीभूतः सदाऽऽनन्दी, पद्मलेश्याऽधिको भवेत् ॥६॥ उ.भा०४ पृ० ९१
रागद्वेषविनिर्मुक्तः, शोकनिन्दाविवर्जितः। परमात्मत्वसंपन्नः, शुक्ललेश्यो भवेन्नरः ॥ ७ ॥ उ० भा० ४ पृ० ९१
यादृशी जायते लेश्या, समयेऽन्त्ये शरीरिणः। तादृश्येव भवेल्लेश्या, प्रायस्तस्यान्यजन्मनि ॥८॥ ध० पृ० ५

## १३० मनःशुद्धिः

दानं पूजा तपश्चैव, तीर्थसेवा श्रुतं तथा। सर्वमेव वृथा तस्य यस्य शुद्धं न मानसम् ॥ १ ॥ धर्म० पृ. ३, श्लो० ८१
सर्वाः संपत्तयस्तस्य, विशुद्धं यस्य मानसम्। उपानद्गूढपादस्य, ननु चर्मावृतैव भूः ॥ २ ॥ सु० पृ. २०४ श्लो. ७
मनःशुद्धिमबिभ्राणा ये तपस्यन्ति मुक्तये। त्यक्त्वा नावं भुजाभ्यां ते, तितीर्षन्ति महार्णवम् ॥३॥ यो. श्लो. ४२
सत्येन शुध्यते वाणी, मनो ज्ञानेन शुध्यति। गुरुशुश्रूषया कायः, शुद्धिरेषा सनातनी ॥ ४ ॥ त० श्लो० २२२

## १३३ लक्ष्मीः

दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति भूमिभुजो, गृह्णन्ति छलमाकलय्य हुतभुग् भस्मीकरोति क्षणात् ।
अम्भः प्लावयति क्षितौ विनिहितं यक्षा हरन्ति हठात्, दुर्वृत्तास्तनया नयन्ति निधनं धिग्बह्वधीनं धनम् ॥ १॥ सि.
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते, तस्य तृतीया गतिर्भवति ॥ २ ॥
दातव्यं भोक्तव्यं, सति विभवे संचयो न कर्तव्यः । पश्येह मधुकरीणां, संचितमर्थं हरन्त्यन्ये ॥३॥ सु. पृ. ६५
कीटिकासंचितं धान्यं, मक्षिकासंचितं मधु, कृपणैः संचिता लक्ष्मीरन्यैरेवोपभुज्यते ॥ ४ ॥
कृपणेन समो दाता, न भूतो न भविष्यति । अस्पृशन्नेव स्ववित्तं, परेभ्यः संप्रयच्छति ॥ ५ ॥ सु. पृ.२४ श्लो. ४,५
आपद्गतं किं हससि द्रविणान्धमूढ ! लक्ष्मीः स्थिरा न भवति किमत्रचित्रम् ।
दृष्टं सरवे भवति यज्जलयन्त्रमध्ये, रिक्तो भृतश्च भवति भरितश्च रिक्तः ॥ ६ ॥
चत्वारो धनदायादाः, धर्माग्निनृपतस्कराः । तेषां ज्येष्ठापमानेन, त्रयः कुप्यन्ति बान्धवाः ॥ ७ ॥

## १३४ ज्ञानाचारः

वारसविहम्मि (म्मि वि) तवे, सब्भितरबाहिरे कुसलदिट्ठे । न वि अत्थि न वि अ होहि, सज्झायसमं तवोकम्मं ॥१॥
मणवयणकायगुत्तो, नाणावरणं च खवइ अणुसमयं । सज्झाए वट्टंतो, खणे खणे जाइ वेरग्गं ॥ २ ॥

## १३२ आत्मनिन्दा गर्भित–जिन–स्तुतिः

दत्तं न दानं परिशीलितं च, न शालि शीलं न तपोऽभितप्तम् ।
शुभो न भावोऽप्यभवद् भवेऽस्मिन्, विभो ! मया भ्रान्तमहो ! मुधैव ॥ १ ॥
दग्धोऽग्निना क्रोधमयेन दष्टो, दुष्टेन लोभाख्यमहोरगेण ।
ग्रस्तोऽभिमानाजगरेण माया, जालेन बद्धोऽस्मि कथं भजे त्वाम् ? ॥ २ ॥
वैराग्यरङ्गः परवञ्चनाय, धर्मोपदेशो जनरञ्जनाय । वादाय विद्याध्ययनं च मेऽभूत्, कियद् ब्रुवे हास्यकरं स्वमीश ! ॥३॥
परापवादेन मुखं सदोषं, नेत्रं परस्त्रीजनवीक्षणेन । चेतः परापायविचिन्तनेन, कृतं भविष्यामि कथं विभोऽहम् ? ॥४ ॥
आयुर्गलत्याशु न पापबुद्धिर्गतं वयो नो विषयाभिलाषः ।
यत्नश्च भैषज्यविधौ न धर्मे, स्वामिन् ! महामोहविडम्बना मे ॥ ५ ॥
न देवपूजा न च पात्रपूजा, न श्राद्धधर्मश्च न साधुधर्मः ।
लब्ध्वापि मानुष्यमिदं समस्तं, कृतं मयाऽरण्यविलापतुल्यम् ॥ ६ ॥
सद्भोगलीला न च रोगकीला, धनागमो नो निधनागमश्च ।
दारा न कारा नरकस्य चित्ते व्यचिंति नित्यं मयकाऽधमेन ॥ ७ ॥ रत्नाकर०

धर्मोद्योतो महान् येन, विहितो जैनशासने । तस्योपबृंहणा कार्या, गुरुभिर्भाववृद्धये ॥ ७ ॥
मनोविपरिणामेन, गुर्वादिष्टक्रियादिषु । स्थिरतापदनं तेषां, सीदतां स्मारणादिभिः ॥ ८ ॥
जिनैः समानधर्माणः, साधर्मिका उदाहृताः । द्विधाऽपि तेषां वात्सल्यं, कार्यं तदिति सप्तमः ॥ ९ ॥
अइसेसिइड्ढि १ धम्मकही २, वाइ ३ आयरिय ४ खवग ५ नेमित्ती ६ ।
विज्जा ७ रायगणसम्मओ अ ८ तित्थं पभाविंति ॥ १० ॥

## १३६ चारित्राचारः

याश्च चारित्रपुत्रस्य, मातरोऽष्टौ प्रकीर्तिताः । ता एव चरणाचाराः समुपास्या मुमुक्षुभिः ॥ १ ॥
पणिहाणजोगजुत्तो, पंचहिं समिइहिं तिहिं गुत्तीहिं । एस चरित्तायारो, अट्ठविहो होइ नायव्वो ॥ २ ॥
युगमात्रावलोकिन्या, दृष्ट्या सूर्यांशुभासिते । पथि यत्नेन गन्तव्य–मितीर्यासमितिर्भवेत् ॥ ३ ॥
हितं यत् सर्वजीवानां, त्यक्तदोषं मितं वचः । तद्धर्महेतोर्वक्तव्यं, भाषासमितिरित्यसौ ॥ ४ ॥
कोहे माणे अ माया य लोभे अ उवउत्तया । हासे भए मोहरीए, विगहासु तहेव य ॥ ५ ॥
सप्तचत्वारिंशता य–द्दोषैरशनं वर्जितम् । भोक्तव्यं धर्मयात्रायै, सैषणासमितिर्भवेत् ॥ ६ ॥
ग्राह्यं मोच्यं च धर्मोप–करणं प्रत्युपेक्ष्य यत् । प्रमार्ज्यं चेयमादान–निक्षेपसमितिः स्मृता ॥ ७ ॥
निर्जीवेऽशुशिरे देशे, प्रत्युपेक्ष्य प्रमार्ज्यं च । यत्त्यागो मलमूत्रादेः, सोत्सर्गसमितिः स्मृता ॥ ८ ॥

इगदुतिमासक्खवणं, संवच्छरमवि अणसिओ हुज्जा । सज्झायझाणरहिओ, एगोपवासफलंपि न लभिज्ञा ॥ ३ ॥
उग्गमउप्पायणए-सणाहिं सुद्धं च निच्च भुंजंतो । जइ तिविहेणाउत्तो, अणुसमयं भविज्ञ सज्झाए ॥ ४ ॥
ता तं गोकस ! एगग्ग—माणसं नेव उवमिउं सक्का । संवच्छरक्खवणेण वि, जेण तहिं निज्जराऽणंता ॥ ५ ॥
पठनीयं श्रुतं काले, व्याख्यानं पाठनं तथा । आचारः श्रुतधर्मस्य, चाद्यो यल्लिख्यते बुधैः ॥ ६ ॥
उपधानतपस्तप्त्वा, आवश्यकं पठेद्गृही । योगैश्चाप्तागमान् साधु—रित्याचारश्चतुर्थकः ॥ ७ ॥
नाध्येतव्यं श्रुतं चोक्त-वर्णैर्न्यूनाधिकादिभिः । व्यञ्जनानिह्नवाह्वोऽय-माचारः पञ्चमः स्तुतः (षष्ठ ईरितः) ॥ ८ ॥
व्यञ्जनभेदतोऽर्थानां, क्रियाणां भेदो जायते । तेनाभावश्च मुक्तेः स्यात्, के के दोषा भवन्ति न ॥ ९ ॥

## १३५ दर्शनाचारः

ज्ञानाद्यनन्तसंपूर्णैः, सर्वविद्भिर्यदाहि(दोदि)तम् । तत्तथ्यं दर्शनाचारो, निःशङ्काख्योऽयमादिमः ॥ १ ॥
जिनोक्ततत्त्वसंदेहात्, सा च शङ्काऽभिधीयते । शङ्कातो भिद्यते श्रद्धा, दोषोऽयं स्यान्महांस्ततः ॥ २ ॥
निःकाङ्क्षत्वमनेकेषु, दर्शनेष्वन्यवादिषु । द्वितीयोऽयं दर्शनाचा—रोऽङ्गीकार्यः शुभात्मभिः ॥ ३ ॥
अन्यान्यदर्शनाचारो, न काङ्क्ष्यः क्षुल्लकर्षिवत् । तदेव सत्यं विज्ञेयं, यज्जिनैश्च प्रवेदितम् ॥ ४ ॥
विचिकित्सा ससंदेहा, धर्मक्रिया फलं प्रति । तद्दोषः सर्वथा त्याज्यो, दर्शनाचारचारिभिः ॥ ५ ॥
मिथ्यादृशां तपःपूजा—विद्यामन्त्र प्रभावनम् । दृष्ट्वा मुह्यति यो नैव, सोऽमूढदृष्टिः संमतः ॥ ६ ॥

अनशनं द्विधा प्रोक्तं, यावज्जीविकमित्वरम् । द्विघटिकादिकं स्वल्पं, चोत्कृष्टं यावदात्मिकम् ॥ ७ ॥
ऊनोदरितपो द्रव्य—भावभेदात्मकं परैः । विशिष्याज्ञायमानत्वा—न्महाफलं निरन्तरम् ॥ ८ ॥
वर्तते ह्यनया वृत्ति—भिक्षाशनजलादिका । तस्याः संक्षेपणं कार्यं, द्रव्याद्यभिग्रहाश्रितैः ॥ १० ॥
विकृतिकृद्रसानां य- स्त्यागो यत्र तपो हि तत् । गुर्वाज्ञां प्राप्य विकृतिं, गृह्णाति विधिपूर्वकम् ॥ ११ ॥
वीरासनादिना क्लेशः, कायस्त्यागमयुक्तितः । तनुबाधनरूपोऽत्र, विधेयस्तत् तपः स्मृतम् ॥ १२ ॥
इन्द्रियादिचतुर्भेदा, संलीनता निगद्यते । बाह्यतपोऽन्तिमो भेदः, स्वीकार्यः स्कन्दकर्षिवत् ॥ १३ ॥
जंबुदीवे जइ हुज्जा, वालुया ते चेव हुंति रयणाइं । दिज्जंति सत्तखित्ते, न छुट्टए दिवसपच्छित्तं ॥ १४ ॥
जंबुद्दीवे जे हुंति, पव्वया ते चेव हुंति हेमस्स । दिज्जंति सत्तखित्ते, न छुट्टए दिवमपच्छित्तं ॥ १५ ॥
गीतार्थादिगुणैर्युक्तं, लब्ध्वाऽऽचार्यं विवेकिना । प्रायश्चित्ततपो ग्राह्यं, पापफलप्ररोधकम् ॥ १६ ॥
चतुर्धा विनयः प्रोक्तः, सम्यग्ज्ञानादिभेदतः । धर्मकार्ये नरः सोऽर्हो, विनयाह्वतपोऽन्वितः ॥ १७ ॥
यथार्हं तत्प्रतीकारो, व्याधिपरीषहादिषु । वैयावृत्त्यं तदुद्भाव्यं, विश्रामणाशनादिभिः ॥ १८ ॥
वेयावच्चं नियर्यं, करेह उत्तमगुणे धरंताणं । सव्वं किर पडिवाई, वेयावच्चं अपडिवाई ॥ १९ ॥
पडिभग्गस्स मयस्स व, नासइ चरणं सुअं अगुणणाए । न हु वेयावच्चच्चिय, असुहोदए नासए कम्मं ॥ २० ॥
स्वाध्यायः पञ्चधा प्रोक्तः, सुमहानिर्जराकरः । तपःपूर्तिरनेन स्यात् , सर्वोत्कृष्टस्ततो हि सः ॥ २१ ॥
सिद्धाः सिध्यन्ति सेत्स्यन्ति, यावन्तः केऽपि मानवाः । ध्यानतपोबलेनैव, सर्वेऽपि (ते) शुभाशयाः ॥ २२ ॥

कल्पनाजालनिर्मुक्तं, सद्भूतवस्तुचिन्तनम् । विधेयं यन्मनःस्थैर्यं, मनोगुप्तिर्भवेत्त्रिधा ॥ ९ ॥
मौनावलम्बनं साधोः, संज्ञादिपरिहारतः । वाग्वृत्तेर्वा निरोधो यः, सा वाग्गुप्तिरिहोदिता ॥ १० ॥
कायगुप्तिर्द्विधा प्रोक्ता, चेष्टानिवृत्तिलक्षणा । यथागमं द्वितीया च, चेष्टानियमलक्षणा ॥ ११ ॥

## १३७ वीर्याचारः

बाह्याभ्यन्तरसामर्थ्या—निह्नवेन प्रवर्तनम् । सर्वेषु धर्मकार्येषु, वीर्याचरणमुच्यते ॥ १ ॥
अणिगूहिअबलविरिओ, परक्कमइ जो जहुत्तमाउत्तो । जुंजइ अ जहाथामं, नायव्वो वीरिआयारो ॥ २ ॥

## १३८ तपाचारः

मूलोत्तरगुणश्रेणि—प्राज्यसाम्राज्यसिद्धये । बाह्यमाभ्यन्तरं चेत्थं, तपः कुर्यान्महामुनिः ॥ १ ॥
ज्ञानमेव बुधाः प्राहुः, कर्मणां तापनात्तपः । तदाभ्यन्तरमेवेष्टं, बाह्यं तदुपबृंहकम् ॥ २ ॥
तदेव हि तपः कार्यं, दुर्ध्यानं यत्र भवेत् । येन योगा न हीयन्ते, क्षीयन्ते नेन्द्रियाणि च ॥ ३ ॥
द्वादशधा तपाचारा-स्तपोवद्भिर्निरूपिताः । अनशाद्याः षट् बाह्याः षट्, प्रायश्चित्तादयोऽन्तगाः ॥ ४ ॥
अणसण १ मूणोदरिया २, वित्तिसंखेवणं ३ रसच्चाओ ४ । कायकिलेसो ५ संली—णया ६ य बज्झो तवो होइ ॥५॥
पायच्छित्तं १ विणओ २, वेयावच्चं ३ तहेव सज्झाओ ४ । झाणं ५ उस्सग्गो ६ वि य, अब्भितरओ तवो होइ ॥६॥

समणेण सावएण वा-ऽवस्स कायव्वं हवइ जम्हा । अंतो अहोनिसिस्स य, तम्हा आवस्सयं नाम ॥ ८ ॥
छुहवेयण १ वेयावच्चे ३, संजम ३ ज्झाण ४ पाणरक्खणट्ठाए ५ । इरियं च विसोहेउं ६, भुंजइ नो रूवरसहेउं ॥९॥
अहव न जिमिज्ज रोगे १, मोहुदए २ सयणमाइउवसग्गे । पाणिदया ४ तवहेउं ५, अंते तणुमोयणत्थं ६ च ॥१०॥

## १४० क्षमाधिकारः

गयमेयज्ञमहामुणि–खंदगसीसाण साहुचरियाइं । समरंतो कह कुप्पसि, इत्तियमित्तेऽवि रे जीव ! ॥ १ ॥
अक्कोसहणणमारण–धम्मब्भंसाण बालसुलभाणं । लाभं मन्नइ धीरो, जहुत्तराणं अभावम्मि ॥ २ ॥
रे जीव सुहदुहेसु, निमित्तमित्तं परो जीयाणं पि । सकयफलं भुंजंतो, कीस मुहा कुप्पसि परस्स ॥ ३ ॥
पढमं चिय तं जंतु, कोहग्गी डहइ जत्थ उववज्जे । त(ज)त्थुप्पन्नो तं चेव, इंधणं धूमकेउ व्व ॥ ४ ॥
रे जीव ! कसायहुआ–सणेण दड्ढे चा(च)रित्तघरसारे । भमिहिसि भवकंतारे, दीणमणो दुत्थिउ व्व तुमं ॥ ५ ॥
जं अज्जियं चरित्तं, देसूणाए वि पुव्वकोडीए । तं पि हु कसायमित्तो, हारेइ नरो मुहुत्तेणं ॥ ६ ॥
सेयंवरो य आसं–बरो य बुद्धो अ अहव अन्नो वा । समभावभाविअप्पा, लहेइ मुक्खं न संदेहो ॥ ७ ॥
विकल्पविषयोत्तीर्णः, स्वभावालम्बनः सदा । ज्ञानस्य परिपाको यः, स शमः परिकीर्तितः ॥ ८ ॥
सह कलेवर ! खेदमचिन्तयन् स्ववशता हि पुनस्तव दुर्लभा । घनतरं च सहिष्यसि जीव ! हे, परवशो न च तत्र गुणोऽस्ति ते ॥९॥

निर्जराकरणे बाह्या—च्छ्रेष्ठमाभ्यन्तरं तपः । तत्राप्येकातपत्रत्वं, ध्यानस्य मुनयो जगुः ॥ २३ ॥
अन्तर्मुहूर्त्तमात्रं य—देकाग्रचित्तताऽन्वितम् । तद्ध्यानं चिरकालानां, कर्मणां क्षयकारणम् ॥ २४ ॥
ध्याता ध्यानं तथा ध्येय—मेकतावगतं त्रयम् । तस्य ह्यनन्यचित्तस्य, सर्वदुःखक्षयो भवेत् ॥ २५ ॥
प्रायो वाङ्मनसोरेव, स्याद्ध्याने हि नियन्त्रणा । कायोत्सर्गे तु कायस्या—प्यतो ध्यानात् फलं महत् ॥ २६ ॥
ऊर्ध्वस्थशयितायेश्च, कायोत्सर्गः क्रियारतैः । एकोनविंशतिदोषै—र्मुक्तः कार्यो यथाविधि ॥ २७ ॥

## १३९ प्रव्रज्या

अंतोमुहुत्तमित्तं, विहिणा विहिया करेइ पव्वज्जा । दुक्खाणं पज्जंतं, चिरकालकयाइ किं भणिमो ? ॥ १ ॥
वरं अग्गिम्मि पवेसो, वरं विसुद्धेण कम्मणा मरणं । मा गहियव्वयभंगो, मा जीअं खलियसीलस्स ॥ २ ॥
दीक्षा मोहहरी महोदयकरी दीक्षा त्रिलोकार्चनी, दीक्षा शुद्धिकरी विपादहरणी दीक्षा च शिक्षाऽवनी ॥
दीक्षा श्रीजिनसेविता गुणगणैर्दीक्षा सदा पूरिता । तां श्रीक्षान्तियुतां भवान्तपदवीमाराध्य जग्मुर्जनाः ॥ ३ ॥
मेरुसर्षपयोः मध्यो—तनखद्योतपोतयोः । अन्तरं यादृशं ताद—गनगारिगृहस्थयोः ॥ ४ ॥
निराश्रवं संयममात्मशुध्ध्या, प्रपाल्य चारित्रगुणान्वितः सन् ।
क्षिप्त्वाऽष्टकर्माण्यखिलानि साधु—रुपैति निर्वाणमनन्तसौख्यम् ॥ ५ ॥
पडिलेहणं कुणंतो, मिहो कहं कुणइ जणवयकहं वा । देइ च पच्चक्खाणं, वाएइ सयं पडिच्छइ वा ॥ ६ ॥
पुढवि आउक्काए, तेऊ वाऊ वणस्सइ तसाणं । पडिलेहणापमत्तो, छन्नं पि विराहओ होइ ॥ ७ ॥

एगत्थ सव्वधम्मा, साहम्मियवच्छलं तु एगत्थ । बुद्धितुलाएतुलिया, दो वि अ तुल्लाइं भणिआइं ॥ २॥
साधर्मिवत्सले पुण्यं, यद्भवेत्तद्वचोऽतिगम् । धन्यास्ते गृहिणोऽवश्यं, तत् कृत्वाऽश्नन्ति प्रत्यहम् ॥ ३ ॥

## १४४ श्रावककृत्यानि

मन्नह जिणाणं आणं, मिच्छं परिहरह धरह सम्मत्तं । छव्विहआवस्सयम्मि य, उज्जुत्ता होह पइदिवसं ॥ १ ॥
पव्वेसु पोसहवयं, दाणं सीलं तवो य भावो य । सज्झाय नमुक्कारो, परोवयारो य जयणा य ॥ २ ॥
जिणपूआ जिणथुणणं, गुरुथुई साहम्मियाण वच्छल्लं । सव्वविरइमणोरह, एमाइं सड्ढकिच्चाइं ॥ ३ ॥

## १४५ प्रकीर्णकश्लोकानि

सम्पत्तौ नियमः शक्तौ, सहनं यौवने व्रतम् । दारिद्र्ये दानमत्यल्पमपि लाभाय भूयसे ॥ १ ॥ प्र. पृ. १४१, श्लो. १
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं पिबेज्जलम् । सत्यपूतं वदेद् वाक्यं, मनःपूतं समाचरेत् ॥२॥ आह्निक, श्लो. ३३
सा किं सभा यत्र न सन्ति वृद्धा, वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न चैव सत्यं, सत्यं हि तद्यत्र परस्य रक्षा ॥ ३ ॥ धर्मकल्प० पृ० ७८, श्लो० ६५
उदारस्य तृणं वित्तं, शूरस्य मरणं तृणम् । विरक्तस्य तृणं भार्या, निःस्पृहस्य तृणं जगत् ॥४॥ उद्भटसागर श्लो. १३४
लोभमूलानि पापानि, रसमूलानि व्याधयः । स्नेहमूलानि, दुःखानि, त्रीणि त्यक्त्वा सुखी भव ॥ ५ ॥उ० पृ० ४९

## १४१ विंशतिस्थानकानि

अरिहंत १ सिद्ध २ पवयण ३, गुरु ४ थिविर ५ बहुस्सुए ६ तवस्सीसु ७ ।
वच्छल्लया य तेसिं, अभिक्खणं नाणोवओगे अ ८ ॥ १ ॥
दंसण ९ विणए १० आव—स्सए ११ य सीलव्वए १२ निरइयारो ।
खणलव १३ तव १४ च्चियाए १५, वेयावच्चे १६ समाही १७ य ॥ २ ॥
अपुव्वनाणगहणे १८, सुअभत्ती १९ पवयणे पभावणया २० । एएहिं कारणेहिं, तित्थयरत्तं लहइ जीवो ॥ ३ ॥

## १४२ समकितलक्षणानि

शमैः शाम्यति क्रोधादीन्, अपकारे महत्यपि । लक्ष्यते तेन सम्यक्त्वं तदाद्यं लक्षणं भवेत् ॥ १ ॥
दुःखत्वेनानुमन्वानः, सुरादिविषयं सुखम् । मोक्षाभिलाषसंवेगा-श्रितः स दर्शनी भवेत् ॥ २ ॥
संसारकारकागार—विवर्जनपरायणा । प्रज्ञा चित्ते भवेद्यस्य, स निर्वेदकवान्नरः ॥ ३ ॥
दीनदुःस्थितदारिद्र्य—प्राप्तानां प्राणिनां सदा । दुःखनिवारणे वाञ्छा, सोऽनुकम्पाऽभिधीयते ॥ ४ ॥
प्रभुभिर्भाषितं यत्तत्, तत्त्वान्तरश्रुतेऽपि हि । निःशङ्कं मन्यते सत्यं, तदास्तिक्यं सुलक्षणम् ॥ ५ ॥

## १४३ साधर्मिकवात्सल्यं

सर्वैः सर्वे मिथः सर्व—संबन्धा लब्धपूर्विणः । साधर्मिकादिसंबन्ध—लब्धारस्तु मिताः क्वचित् ॥ १ ॥

आकारैरिङ्गितैर्गत्या, चेष्टया भाषणेन च । नेत्रवक्त्रविकारैश्च, लक्ष्यतेऽन्तर्गतं मनः ॥ २० ॥ सू० पृ० ३४

कोदारेण विदारिता वसुमती पश्चात् खरारोहणं, तत्पापिष्टकुलालपादहननं दण्डेन चक्रभ्रमम् ।
दत्वा छेदनताडनं च दहनं सर्वं विसोढं मया । ग्राम्यस्त्रीकरटंकणं बहुकृतं तन्नोऽपि दुःखं महत् ॥२१ ॥

परस्पृहा महादुःखं, निःस्पृहत्वं महासुखम् । एतदुक्तं समत्वेन, लक्षणं सुखदुःखयोः ॥ २२ ॥

उत्कृष्टाद् देशविरतेः स्थानात्सर्वजघन्यकम् । स्थानं सर्वविरतेरनन्तगुणतोऽधिकम् ॥ २३ ॥

अल्पानामवि वस्तूनां, संहतिः कार्यसाधिका । तृणैर्विधीयते रज्जुर्बध्यन्ते मत्तदन्तिनः ॥ २४ ॥

न्यक्कारयोग्यो न हि कोऽपि लोको, दुर्वृत्तता किन्तु तदीयपात्रम् । सत्योपदेशेन विनाश्य तां तु प्रेमैव सर्वेषु तनोतु विद्वान् ॥२५॥

ज्ञानी विनीतः सुभगः सुशीलः, प्रभुत्ववान् न्यायपथप्रवृत्तः। त्यागी धनाढ्यः प्रशमी समर्थः, पञ्चाप्यमी भूमिषु कल्पवृक्षाः॥२६॥

यौवने विषयेभ्योऽसौ यथा ह्युत्तिष्ठते भवी । तथा ह्युत्तिष्ठते चेन्मुक्त्यै, किं हि न्यूनं तदा भवेत् ॥ २७ ॥

पढमं पोरिसिं सज्झायं, बीयं झाणं झियायई । तइयाए भिक्खायरियं, पुणो चउत्थीइ सज्झायं ॥२८ ॥ उ. ष. गा.१२

पुढवी आउकाए तेऊ वाऊ वणस्सइ तसाणं । पडिलेहणापमत्तो छण्हंपि विराहओ होइ ॥ २९॥ उ. ष. गा.३०

राजदण्डभयात्पापं, नाचरत्यधमो जनः । परलोकभयान्मध्यः, स्वभावादेव चोत्तमः ॥ ३० ॥ सु. सू. पृ.१५

चार्वाकोऽध्यक्षमेकं सुगतकणभुजौ सानुमानं सशाब्दम् , तद्वैतं पारमर्षः सहितमुपमया तत्त्रयं चाक्षपादः ।
अर्थापत्त्या प्रभाकृत् वदति तदखिलं मन्यते भट्ट एतत्, साभावं द्वे प्रमाणे जिनपतिसमये स्पष्टतोऽस्पष्टतश्च ॥३१॥ पृ.२४७

सर्वत्र सर्वस्य सदा प्रवृत्तिर्दुःखस्य नाशाय सुखस्य हेतोः ।

अर्थस्य मूलं प्रियवाक् क्षमा च, कामस्य वित्तं च वपुर्वयश्च। धर्मस्य दानं च दया दमश्च, मोक्षस्य सर्वार्थनिवृत्तिरेव॥६॥
खण्डनी पेषणी चुल्ली, जलकुम्भः प्रमार्जनी। पञ्चशूना गृहस्थस्य, बध्यते यास्तु वाहयन् ॥ ७ ॥
पोषं धर्मस्य धत्ते यत्, तद्भवेत् पौषधव्रतम्। आहारदेहसत्काराब्रह्मव्यापारवर्जनम् ॥ ८ ॥ का, स० ३० श्लो० ७१४
वैराग्यहस्तिनः पीठे, समारोप्य स्वमानसम्। विवेकविनयाद्यैर्हि, जीयात् क्रोधाद्यरीन् बुधः ॥ ९ ॥ ध० श्लो० ३३
मैत्रीप्रमोदकारुण्यमाध्यस्थ्याख्या महागुणाः। युक्तस्तैर्लभते मुक्तिं, जीवोऽनन्तचतुष्टयम् ॥१०॥ प्रा० स० ६ श्लो.३८२
पीडयेन्न जरा यावद् व्याधिर्यावन्न बाधते। मृत्युर्धावति नो यावत्, तावद् धर्मो विधीयते ॥११॥ पा. स०१ श्लो.७६९
वैराग्यशुद्धधर्मा, देवादिसत्तत्त्वविद्विरतिधारी। संवरवान् शुभवृत्तिः, साम्यरहस्यं भज शिवार्थिन् ॥१२॥ अ. श्लो. ४
बहूनामप्यसाराणां, समुदायो जयावहः। तृणैः संजायते रज्जुर्बद्ध्यन्ते येन दन्तिनः ॥ १३ ॥
संहतिः श्रेयसी पुंसां, स्वपक्षे तु विशेषतः। तुषैरपि परिभ्रष्टाः, न प्ररोहन्ति तण्डुलाः ॥ १४ ॥ सू० पृ० २१
दूषणं मतिरुपैति नोत्तमी, माध्यमी स्पृशति भाषते न च। वीक्ष्य पार्श्वमथ भाषतेऽधमो, रारटीति सहसाऽधमाधमः॥१५॥
शास्त्रं बोधाय दानाय, धनं धर्माय जीवितम्। वपुः परोपकाराय, धारयन्ति मनीषिणः ॥ १६ ॥ सू० पृ० ३०
पिबन्ति नद्यः स्वयमेव नाम्भः स्वादन्ति न स्वादुफलानि वृक्षाः।
पयोमुचां किं क्वचिदस्ति शस्यं ?, परोपकाराय सतां विभूतितवः ॥ १७ ॥ सूक्तमुक्तावली पृ० ३१
नागुणी गुणिनं वेत्ति, गुणी गुणिषु मत्सरी। गुणी च गुणरागी च, विरलः सरलो जनः ॥ १८ ॥ सू. पृ. ३२
संधयेत्सरला सूची, वक्रा छेदाय कर्तरी। अतो विमुच्य वक्रत्वं, गुणानेव समाश्रय ॥ १९ ॥

गइलक्खणो उ धम्मो अहम्मो ठाणलक्खणो । भायणं सव्वदव्वाणं नहं ओगाहलक्खणं ॥ ४९ ॥ उ० अ० २८
वत्तणालक्खणो कालो जीवो उवओगलक्खणो । नाणेणं दंसणेणं च सुहेण य दुहेण य ॥ ५० ॥
नाणं च दंसणं चेव चरित्तं च तवो तहा । वीरियं उवओगो य एयं जीवस्स लक्खणं ॥ ५१ ॥
सद्दंधयार उज्जोओ पहा छायातवे इ वा । वण्णरसगंधफासा पुग्गलाणं तु लक्खणं ॥ ५२ ॥
एगत्तं च पुहत्तं च संखा संठाणमेव य । संयोगा य विभागा य पज्जवाणं तु लक्खणं ॥ ५३ ॥
नाणं च दंसणं चेव चरित्तं च तवो तहा । एयं मग्गमणुपत्ता जीवा गच्छंति सोग्गइं ॥ ५४ ॥
नादंसणिस्स नाणं नाणेण विना न हुंति चरणगुणा । अगुणिस्स नत्थि मोक्खो, नत्थि अमुक्खस्स निव्वाणं ॥५५ ॥
नाणेण जाणइ भावे दंसणेण य सद्दहे । चरित्तेण निगण्हाइ तवेण परिसुज्झई ॥ ५६ ॥
जहा सूई ससुत्ता पडिया न विणस्सई । तहा जीवे ससुत्ते संसारे न विणस्सइ ॥ ५७ ॥ उ० अ० २९
अह पंचहिं ठाणेहिं जेहिं सिक्खा न लब्भई । थंभा कोहा पमाएणं रोगेणालस्सएण य ॥ ५८ ॥ उ० अ० ११
कुप्पवयणपाखंडी सव्वे उम्मग्गपट्ठिया । सम्मग्गं तु जिणक्खायं एस मग्गो हि उत्तमो ॥ ५९ ॥ उ० अ० २३
पडिणीयं य बुद्धाणं वाया अदुव कम्मुणा । आवी वा जइ वा रहस्से णेव कुज्जा कयाइ वि ॥ ६०॥ ठ० अ० १
परिजूरइ ते सरीरयं केसा पंडुरया हवंति ते। से सोयवले य हायई समयं गोयम ! मा पमायए ॥६१॥ उ० अ० १०
अप्पा कत्ता विकत्ता य दुहाण य सुहाण य । अप्पा मित्तममित्तं च दुप्पट्ठिय सुपट्ठिओ ॥ ६२ ॥ उ० अ० २०
अप्पा नई वेयरणी अप्पा मे कूडसामली । अप्पा कामदुहा घेणू अप्पा मे नंदणं व्रणं ॥ ६३ ॥

तथापि दुःखं न विनाशमेति सुखं कस्यापि भजेत् स्थिरत्वम् ॥ ३२ ॥

सवणे नाणे य विन्नाणे, पच्चक्खाणे य संजमे । अणासवे तवे चेव, वोदाणे अकिरिया सिद्धी ॥ ३३ ॥

सत्तलवा जइ आउं, पहुप्पमानं तओ हु सिज्झंता । तत्तियमित्तं न हु यं, ततो लवसत्तमा जाया ॥ ३४ ॥

क्रियाहीनं कुसाधुं च, दृष्ट्वा चित्तं न चाल्यते । तत् सम्यक्त्वं दृढं ज्ञेयं, धर्मे श्रेणिकभूपवत् ॥ ३५ ॥

दंसणभट्ठो भट्ठो, दंसणभट्ठस्स नत्थि निव्वाणं । सिज्झंति चरणरहिआ, दंसणरहिआ न सिज्झंति ॥ ३६ ॥

अरिहं देवो गुरुणो सुसाहुणो जिणमयं मह पमाणं । इच्चाइ सुहो भावो, सम्मत्तं विंति जगगुरुणो ॥ ३७ ॥

कत्थ अम्हारिसा पाणी, दूसमादोसदूसिओ । हा अणाहा कहं हुंता न हुंतो जइ जिणागमो ॥ ३८ ॥

जं अन्नाणी कम्मं, खवेइ बहुआइ वासकोडीहिं । तन्नाणी तीहिं गुत्तो, खवेइ उसासमित्तेणं ॥ ३९ ॥ संबोध० प्र०

श्रीशान्तिनाथादपरो न दानी, दशार्णभद्रादपरो न मानी । श्रीशालिभद्रादपरो न भोगी, श्रीस्थूलभद्रादपरो न योगी ॥४०

पूर्वं न मंत्रो न तदा विचारः, स्पर्धा न केनापि फले न वाञ्छा ।
पश्चानुतापोऽनुशयो न गर्वो हर्षस्तथा संगमके बभूव ॥ ४४ ॥

शिष्टे संगः श्रुतौ रंगः, सद्ध्याने धीर्धृतौ मतिः । दाने शक्तिर्गुरौ भक्तिः, षडेते सुकृताकराः ॥ ४५ ॥

धम्मो अहम्मो आगासं कालो पुग्गल जंतवो । एस लोगुत्ति पण्णत्तो जिणेहि वरदंसिहिं ॥ ४६ ॥ उ० अ० २८

अत्थि एगं धुवं ठाणं लोगग्गमि दुरारुहं । जत्थ नत्थि जरा मच्चू वाहिणो वेयणा तहा ॥ ४७ ॥ उ० अ० २३

धम्मो अहम्मो आगासं दव्वं इक्किक्कमाहियं । अणंताणि य दव्वाणि कालो पुग्गल जंतवो ॥ ४८ ॥ उ० अ० २८

सुवण्णरुप्पस्स उ पव्वया भवे सिया हु केलाससमा असंखया । नरस्स लुद्धस्स न तेहिं किंचि इच्छा हु आगाससमा अणंतिया ॥
जहा य अंडप्पभवा बलागा अंडं बलागप्पभवं जहा य । एमेव मोहाययणं खु तण्हं मोहं च तण्हाययणं वयंति ॥८०॥
निम्ममो निरहंकारो निस्संगो चत्तगारवो । समो य सव्वभूएसु तसेसु थावरेसु य ॥ ८१ ॥ उ० अ० १९
नत्थि चरित्तं सम्मत्तविहूणं दंसणे उ भइयव्वं । सम्मत्तचरित्ताइं जुगवं पुव्वं व सम्मत्तं ॥ ८२ ॥ उ० अ० २८
मिच्छादंसणरत्ता सनियाणा हु हिंसगा । इय जे मरंति जीवा तेसिं पुण दुल्लहा बोही ॥ ८३ ॥ उ० अ० ३६
सम्मदंसणरत्ता अनियाणा सुक्कलेसमोगाढा । इय जे मरंति जीवा सुलहा तेसिं भवे बोही ॥ ८४ ॥ उ० अ० ३६
देवदाणवगंधव्वा जक्खरक्खसकिन्नरा । बंभयारिंःनमंसंति दुक्करं जे करंति तं ॥ ८५ ॥ उ० अ० १६
मा पेह पुरा पणामए अभिकंखे उवहिं धुणित्तए । जो दूमण तेहिं णो णया ते जाणंति समाहिमाहियं ॥८६॥ सू. अ.२
समरेसु अगारेसु संधीसु य महापहे । एगो एगित्थिए सद्धिं णेव चिट्ठे न संलवे ॥ ८७ ॥ उ० अ० १
जहा कुक्कुडपोयस्स निच्चं कुललओ भयं । एवं खु बंभयारिस्स इत्थीविग्गहओ भयं ॥ ८८ ॥ द. अ. ८
हत्थपायपडिच्छिन्नं कन्ननासविगप्पिअं । अवि वाससइं नारिं बंभयारी विवज्जए ॥ ८९ ॥ द० अ० ८
जहा बिरालावसहस्स मूले न मूसगाणं वसही पसत्था । एमेव इत्थीनिलयस्स मज्झे न बंभयारिस्स खमो निवासो ॥९०॥
सव्वं विलवियं गीयं सव्वं नट्टं विडंबिणा । सव्वे आहरणा भारा सव्वे कामा दुहावहा ॥ ९१ ॥ उ० अ० १३
सल्लं कामा विसं कामा कामा आसीविसोवमा । कामे पत्थेमाणा, अकामा जंति दुग्गइं ॥ ९२ ॥ उ० अ० ९
चीराजिणं निगिणिणं जडी संघाडि मुंडिणं । एयाइं पि न तायंति दुस्सीलं परियागयं ॥ ९३ ॥ उ० अ० ५

वरं मे अप्पा दंतो संजमेण तवेण य । माहं परेहिं दम्मंतो बंधणेहिं वहेहिं य ॥ ६४ ॥ उ० अ० १
जो सहस्सं सहस्साणं संगामे दुज्जए जिणे । एगं जिणिज्ज अप्पाणं एस से परमो जओ ॥ ६५ ॥ उ० अ० ९
अप्पा चेव दमेयव्वो अप्पा हु खलु दुद्दमो । अप्पा दंतो सुही होई अस्सिं लोए परत्थ य ॥ ६६ ॥ उ० अ० १
पंचिंदियाणि कोहं माणं मायं तहेव लोभं च । दुज्जयं चेव अप्पाणं सव्वमप्पे जिए जियं ॥ ६७ ॥ उ० अ० ९
अप्पाणमेव जुज्जाहि किं ते जुज्झेण वज्झओ । अप्पणा चेव अप्पाणं जइत्ता सुहमेहए ॥ ६८ ॥
एगे जिए जिया पंच पंच जिए जिया दस । दसहा उ जिणित्ता णं सव्वसत्तू जिणाम हं ॥ ६९ ॥ उ० अं० २३
तवो जोई जीवो जोईठाणं, जोगा सुया सरीरं कारिसंगं । कम्मं एहा संजमजोग संती, होमं हुणामि इसिणं पसत्थं ॥७०॥
जे केई सरीरे सत्ता वण्णे रूवे य सव्वसो । मणसा कायवक्केणं सव्वे ते दुक्खसंभवा ॥ ७१ ॥ उ० अ० ६
दुक्खं हयं जस्स न होई मोहो मोहो हओ जस्स न होई तण्हा । तण्हा हया जस्स न होई लोहो लोहो हओ जस्स न किंचणाइं ॥
अहे वयइ कोहेणं माणेणं अहमागई । माया गइपडिग्घाओ लोहाओ दुहओ भयं ॥ ७३ ॥ उ० अ० ६
कोहो पीइं पणासेइ माणो विणयनासणो । माया मित्ताणि नासेइ लोहो सव्वविणासणो ॥ ७४ ॥ द० अ० ८
कोहो अ माणो अणिग्गहीया माया य लोभो य पवड्ढमाणा । चत्तारि एए कसिणा कसाया सिंचंति मूलाइ पुणब्भवस्स
उवसमेण हणे कोहं माणं मद्दवया जिणे । मायं चाज्जवभावेण लोभं संतोसओ जिणे ॥ ७६ ॥ द० अ० ८
जइ वि य णिगणे किसे चरे जइ पि य भुंजिय मासमंतसो । जे इह मायाइ मिज्जई आगंता गब्भाय णंतसो ॥७७॥
पूयणट्ठा जसोकामी माणसम्माणकामए । बहुं पसवइ पावं मायासल्लं च कुव्वइ ॥ ७८ ॥ द० अ० ५

अत्थंगयंमि आइच्चे, पुरत्था य अणुग्गए । आहारमइयं सव्वं मणसा वि न पत्थए ॥ १०९ ॥ द० अ० ८

न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा । मुच्छा परिग्गहो वुत्तो इइ वुत्तं महेसिणा ॥ ११० ॥ द० अ० ६

लोभस्से समणुफासे मन्ने अन्नयरामवि । जे सिया सन्निहीकामे गिही पव्वइए न से ॥ १११ ॥ द० अ० ६

जे केइ बाला इह जीवियट्ठी पावाइ कम्माइ करंति रुद्धा । ते घोररुवे तमिसंधयारे तिव्वाभितावे नरए पडंति ॥११२॥

सउणी जह पंसुगुंडिया विहुणिय धंसयइ सियं रयं । एवं दविओवहाणवं कम्मं खवइ तवस्सी माहणे ॥११३॥ सू. अ. २

संवुज्झह किं न वुज्झह, संबोहो खलु पेच्च दुल्लहा । णो हूवणमंति राइओ नो सुलभं पुणरवि जीवियं ॥११४॥ सू.अ.२

जे परिभवइ परं जणं संसारे परिवत्तई महं । अदु इंखिणिया उ पाविया इति संखाय मुणी ण मज्जइ ॥११५॥ सू.अ. २

महुकारसमा वुद्धा जे भवंति अणिस्सिया । नाणापिण्डरया दंता तेण वुच्चंति साहुणो ॥ ११६ ॥ द. अ. १

समयाए समणो होइ वंभचेरेण वंभणो । नाणेण य मुणी होइ तवेण होइ तावसो ॥ ११७ ॥ उ. अ. १५

नवि मुंडिएण समणो न ओंकारेण वंभणो । न मुणी रण्णवासेणं, कुसचीरेण न तावसो ॥ ११८ ॥ उ. अ. २५

धम्मस्स य पारए मुणी, आरंभस्स य अंतए ठिए। सोयंति य णं ममाइणो णो लब्भंति णियं परिग्गहं ॥११९॥ सू. अ.२

जे न वंदे न से कुप्पे वंदिओ न समुक्कसे। एवमन्नेसमाणस्स सामण्णमणुचिट्ठइ ॥ १२० ॥ द. अ. ५

पण्णसम्मते सया जये समताधम्ममुदाहरे मुणी । सुहुमे उ सया अलूसए णो कुज्जे णो माणि माहणे ॥१२१॥ सू. अ.२

अणुसासिओ न कुपिज्जा खंति सेविज्ज पंडिए । खुड्डेहिं सह संसग्गिं हासं कीडं च वज्जए ॥१२२॥ उ० अ० १

जे यं कंते पिए भोए लद्धे वि पिट्ठि कुव्वइ । साहीणे चयइ भोए सेहु 'चाइ'त्ति वुच्चइ ॥१२३॥ द० अ० २

तेणे जहा संधिमुहे गहीए सकम्मुणा किच्चइ पावकारी। एवं पया पेच्च इह च लोए कडाण कम्माण न मुक्ख अत्थि ॥९४॥
एगया देवलोएसु नरएसु वि एगया। एगया आसुरं कायं अहाकम्मेहि गच्छई ॥ ९५ ॥ उ० अ० ३
रागो य दोसो वि य कम्मबीयं कम्मं च मोहप्पभवं वयंति। कम्मं च जाईमरणस्स मूलं दुक्खं च जाईमरणं वयंति ॥९६॥
कामेहि ण संथवेहि गिद्धा, कम्मसहा कालेण जंतवो। ताले जह बंधणच्चुए एवं आउक्खयम्मि तुट्टति ॥९७॥ सू. अ.२
जं जारिसं पुव्वमकासि कम्मं तमेव आगच्छति संपराए। एगंतदुक्खं भवमज्जणित्ता वेदंति दुक्खी तमणंतदुक्खं ॥९८॥
उवलेवो होइ भोगेसु, अभोगी नोवलिप्पई। भोगी भमइ संसारे—अभोगी विप्पमुच्चई ॥९९॥ उ० अ० २५
जहा किंपागफलाणं परिणामो न सुंदरो। एवं भुत्ताण भोगाणं परिणामो न सुंदरो ॥ १०० ॥ उ० अ० १९
जा जा वच्चइ रयणी न सा पडिनिअत्तइ। अहम्मं कुणमाणस्स अहला जंति राईओ ॥ १०१ ॥उ. अ. १४
संसारमावण्ण परस्स अट्ठा साहारणं जं च करेइ कम्मं। कम्मस्स ते तस्स उ वेयकाले, न बंधवा बंधवयं उवेंति ॥१०२॥
एवं धम्मस्स विणओ मूलं परमो से मुक्खो। जेण किर्त्ति सुयं सिग्घं, निस्सेसं चाभिगच्छइ ॥ १०३ ॥ द० अ० ९
जरा जाव न पीडेइ वाही जाव न वड्ढई। जाविंदिया न हायंति, ताव धम्मं समायरे ॥ १०४ ॥ द० अ० ८
जयं चरे, जयं चिट्ठे जयं आसे जयं सए। जयं भुंजंतो भासंतो पावं कम्मं न बंधई ॥ १०५ ॥ द० अ० ४
जरामरणवेगेणं वुज्झमाणाण पाणिणं। धम्मो दीवो पइट्ठा य गई सरणमुत्तमं ॥ १०६ ॥ उ० अ० २३
धम्मो मंगलमुक्किट्ठं अहिंसासंजमो तवो। देवा वि तं नमंसंति जस्स धम्मे सया मणो ॥ १०७ ॥ द० अ० १
पढमं नाणं तओ दया एवं चिट्ठइ सव्वसंजए। अन्नाणी किं काही किं वा नाहिइ छेय पावगं ? ॥१०८॥ द. अ.४

अपुच्छिओ न भासेज्जा भासमाणस्स अंतरा । पिट्ठिमंसं न खाएज्जा मायामोसं विवज्जए ॥१३९॥ द० अ.८

अपत्तिअं जेण सिया आसु कुप्पेज्ज वा परो । सव्वसो तं न भासेज्जा भासं अहिअगामिणिं ॥१४०॥ द० अ.८

सव्वजीवा वि इच्छंति जीविउं न मरिज्जिउं । तम्हा पाणवहं घोरं निग्गंथा वज्जयंति णं ॥१४१॥ द० अ.६

तहेव फरुसा भासा गुरुभूओवघाइणी । सच्चा वि सा न वत्तव्वा जओ पावस्स आगमो ॥१४२॥ द० अ० ७

तहेव काणं 'काणे' त्ति पंडगं 'पंडगे' त्ति वा । वाहिअं वा वि 'रोगि' त्ति तेणं 'चोरे' त्ति नो वए ॥१४३॥ द० अ.७

सच्चा तहेव मोसा य सच्चामोसा तहेव य । चउत्थी असच्चमोसा य मणगुत्ती चउव्विहा ॥१४४॥ उ. अ.२४

जहा सुणी पूइकण्णी निक्कसिज्जइ सव्वसो । एवं दुस्सिले पडिणीए मुहरी निक्कसिज्जई ॥१४५॥ उ. अ.१

ताणि ठाणाणि गच्छंति सिक्खित्ता संयमं तवं । भिक्खाए वा गिहित्था वा जे संति परिनिव्वुडा ॥१४६॥ उ. अ.५

दुल्लहे खलु माणुसे भवे चिरकालेण वि सव्वपाणिणं । गाढा य विवाग कम्मुणो समयं गोयम ! मा पमायए ॥१४७॥ उ. अ.१०

दुमपत्तए पंडुरए जहा निवडइ राइगणाण अच्चए । एवं मणुयाण जीवियं समयं गोयम ! मा पमायए ॥१४८॥ उ. अ.१०

तिण्णो हु सि अण्णवं महं किं पुण चिट्ठसि तीरमागओ । अभितुर पारं गमित्तए समयं गोयम ! मा पमायए ॥१४९॥

कुसग्गे जह उसबिंदुए थोवं चिट्ठइ लंबमाणए । एवं मणुयाण जीवियं समयं गोयम ! मा पमायए ॥१५०॥उ. अ.१०

इमं च मे अत्थि इमं च नत्थि इमं च मे किच्चमिमं अकिच्चं । तं एवमेवं लालप्पमाणं हरा हरंति त्ति कहं पमाए ॥१५१॥ अ.१४

जावंत अविज्जापुरिसा सव्वे ते दुक्खसंभवा । लुप्पंति बहुसो मूढा संसारम्मि अणंतए ॥१५१॥ उ० अ० ६

मा पच्छ असाधुता भवे अच्चेही अणुसास अप्पगं । अहियं च असाहु सोयती से थणइ परिदेवई बहुं ॥१५३॥ सू. अ.२

वत्थगंधमलंकारं इत्थीओ सयणाणि य । अच्छंदा जे न भुंजंति न से 'चाइ'त्ति वुच्चइ ॥१२४॥ द० अ० २
बहुआगमविण्णाणा समाहिउप्पायगा य गुणगाही । एएण कारणेणं अरिहा आलोयणं सोउं ॥१२५॥ उ० अ० ३६
पाणिवहमुसावाया अदत्तमेहुणपरिग्गहा विरओ । राईभोयणविरओ जीवो भवइ अणासवो ॥१२६॥ उ० अ० ३०
कम्मुणा बंभणो होइ कम्मुणा होइ खत्तिओ । वइसो कम्मुणा होइ सुद्दो हवइ कम्मुणा ॥१२७॥ उ० अ० २५
जहा पोमं जले जायं नोवलिप्पइ वारिणा । एवं अलित्तो कामेहिं तं वयं बूम माहणं ॥१२८॥ उ० अ० २५
तवस्सियं किसं दंतं अवचियमंससोणियं । सुव्वयं पत्तनिव्वाणं तं वयं बूम माहणं ॥१२९॥ उ० अ० २५
जायरूवं जहामट्ठं निद्धंतमलपावगं । रागदोसभयाईयं तं वयं बूम माहणं ॥ १३० ॥ उ० अ० २५
लाभालाभे सुहे दुक्खे जीविए मरणे तहा । समो निंद-पसंसासु समो माणावमाणओ ॥ १३१ ॥ उ० अ० १९
संति एगेहिं भिक्खुहिं गारत्था संजमुत्तरा । गारत्थेहिं च सव्वेहिं साहवो संजमुत्तरा ॥ १३२ ॥ उ० अ० ५
अक्कोसेज्ज परो भिक्खुं न तेसिं पइ संजले । सरिसो होइ बालाणं तम्हा भिक्खू न संजले ॥ १३३ ॥ उ० अ० २
णत्थि ता अहमेव लुप्पए लुप्पंति लोअंसि पाणिणो । एवं सहिएहिं पासए अणिहे से पुट्ठे अहियासए ॥१३४॥ सू. अ. २
दुल्लहा उ मुहदाई मुहाजीवी वि दुल्लहा । मुहादाई मुहजीवी दो वि गच्छंति सोग्गइं ॥ १३५ ॥ द० अ० ५
असच्चमोसं सच्चं च अणवज्जमकक्कसं । समुप्पेहमसंदिद्धं गिरं भासेज्ज पन्नवं ॥ १३६ ॥ द० अ० ७
मुसावाओ य लोगम्मि सव्वसाहूहिं गरहिओ । अविस्सासो य भूयाणं तम्हा मोसं विवज्जए ॥१३७॥ द० अ० ६
जा य सच्चा अवत्तव्वा सच्चामोसा य जा मुसा । जा य बुद्धेहिं अणाइण्णा न तं भासेज्ज पन्नवं ॥१३८॥ द० अ. ७



लक्ष्मीः पुण्यानुसारिणी । ४२ स्त्रीणां च रुदितं बलं । ४३ दोषान् गृह्णंति दुर्जनाः । ४४ परोपदेशे पांडित्यम् । ४५ धातुषु क्षीयमाणेषु, शमः कस्य न जायते । ४६ नरस्याभूषणं रूपं, रूपस्याभरणं गुणः। ४७ ददतु ददतु गाली—र्गालीमन्तो भवन्तः। ४८ यथा लाभस्तथा लोभो । ४९ मात्रासमधिकः कुत्र मात्राहीनेन जीयते । ५० लोकोक्तिरपि यद्विप्रैर्नाऽतीता वाच्यते तिथिः । ५१ संतोषः परमं सुखं । ५२ तृष्णा न जीर्णा वयमेव जीर्णाः । ५३ दुर्लभं मानुषं जन्म । ५४ यथा शीलं तथा गुणाः । ५५ रक्षन्ति पुण्यानि पुरा कृतानि । ५६ गुणं पृच्छस्व मा रूपं, शीलं पृच्छस्व मा कुलम् । ५७ गुणो भूषयते रूपं, शीलं भूषयते कुलम् । ५८ स्वस्थे चित्ते बुद्धयः संभवन्ति । ५९ बुभुक्षितः किं न करोति पापं । ६० नैकत्र सर्वो गुणसंनिपातः । ६१ महाजनो येन गतः स पंथाः । ६२ अल्पश्च कालो बहवश्च विघ्नाः । ६३ वृथा वृष्टिः समुद्रेषु, वृथा दीपो दिवापि च । ६४ सर्वं पदं हस्तिपदे निमग्नम् । ६५ अनायके न वस्तव्यं, न वसेद्बहुनायके । ६६ हतं सैन्यमनायकं । ६७ सारं गृह्णंति पंडिताः । ६८ विद्यया सह मर्तव्यं, कुशिष्याय न दापयेत् । ६९ नास्ति मेघसमं तोयं, नास्ति चात्मसमं बलम् । ७० उत्तमं स्वार्जितं भुक्तं । ७१ पराधीनं वृथा जन्म । ७२ विद्या सर्वस्य भूषणम् । ७३ मनसा चिंतितं कार्यं, वचसा न प्रकाशयेत् । ७४ ज्ञानं भारः क्रियां विना । ७५ संतोष एव पुरुषस्य परं निधानम् । ७६ गुणाः सर्वत्र पूज्यन्ते । ७७ स्वभावो मूर्ध्नि वर्तते । ७८ अतिपरिचयादवज्ञा । ७९ अति सर्वत्र वर्जयेत् । ८० मौनं सर्वार्थसाधनम् । ८१ लोभः सर्वार्थबाधकः । ८२ स्थानभ्रष्टा न शोभन्ते, दन्ताः केशा नखा नराः । ८३ तीर्थं फलति कालेन, सद्यः साधुसमागमः । ८४ सतां हि संगः सकलं प्रसूते । ८५ यो यस्य चित्ते नहि तस्य दूरे । ८६ प्राप्ते तु षोडशे वर्षे, पुत्रं मित्रवदाचरेत् । ८७ एकश्चन्द्रस्तमो हन्ति, न च तारागणोऽपि च । ८८ बुद्धिः कर्मानुसारिणी । ८९ विनाशकाले विपरीतबुद्धिः। ९० प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् । ९१



# सुभाषितरत्नखंडानि

१ सा विद्या या विमुक्तये। २ वचने का दरिद्रता ? ३ वचनेऽपि दरिद्रत्वं, धनाशा तत्र कीदृशी ? ४ विद्याधनं सर्वधनप्रधानम्। ५ विद्या गुरूणां गुरुः। ६ निरस्तपादपे देशे, एरंडोऽपि द्रूमायते। ७ न हि वंध्या विजानाति, गुर्वीं प्रसववेदनाम्। ८ स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते। ९ पयःपानं भुजंगानां, केवलं विषवर्धनम्। १० न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि। ११ गुणी च गुणरागी च, विरलः सरलो जनः। १२ संपत्तौ च विपत्तौ च, महतामेकरूपता। १३ स्पर्धापि विदुषा युक्ता, न युक्ता मूर्खमित्रता। १४ नहि स्वदेहशैत्याय जायन्ते चंदनद्रूमाः। १५ नहि संहरते ज्योत्स्नां, चन्द्रश्चांडालवेश्मनि। १६ छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य। १७ परोपकाराय सतां विभूतयः। १८ प्रारभ्य चोत्तमजना,न परित्यजन्ति। १९ सर्पो दशति कालेन, दुर्जनस्तु पदे पदे। २० शशिना तुल्यवंशोऽपि, निर्धनः परिभूयते। २१ अर्थो हि लोके पुरुषस्य बन्धुः। २२ मुखे च कटुता नित्यं, धनिनां ज्वरिणामिव। २३ रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः। २४ दारिद्र्यादधिकं दुःखं, न भूतं न भविष्यति। २५ दारिद्र्यमेकं गुणकोटिहारि। २६ लोभाविष्टो नरो हन्ति, स्वामिनं वा सहोदरम्। २७ लोभेन बुद्धिश्चलति। २८ हतमपि च हंत्येव मदनः। २९ कंदर्पदर्पदलने विरला मनुष्याः। ३० उदारचरितानां तु वसुधैव कुटुम्बकम्। ३१ शुष्केऽपि हि नदीमार्गे खन्यते सलिलार्थिभिः। ३२ दातृयाचकयोर्भेदः कराभ्यामेव सूचितः। ३३ परोपकारः पुन्याय पापाय परपीडनम्। ३४ आकृतिर्गुणान् कथयति। ३५ क्षमा वीरस्य भूषणम्। ३६ यतो धर्मस्ततो जयः। ३७ कालः सुप्तेषु जागर्ति। ३८ कामातुराणां न भयं न लज्जा। ३९ चिंतातुराणां न सुखं न निद्रा। ४० नंदस्तुष्टो हस्ततालीं ददाति। ४१

हृदयस्य विभूषणम्। १४२ विनाश्रयं न शोभन्ते, पंडिता वनिता लताः। १४३ जिह्वाग्रे मित्रबान्धवाः। १४४ लक्ष्मीर्वसति वाणिज्ये। १४५ प्रत्यक्षे गुरवः स्तुत्याः। १४६ सर्वनाशे समुत्पन्ने, ह्यर्धं त्यजति पंडितः। १४७ परेंगितज्ञानफला हि बुद्धयः। १४८ छिद्रेष्वनर्था बहुलीभवन्ति। १४९ जयति जगति नादः पंचमश्चोपवेदः। १५० शूचि भूमिगतं तोयं, शूचिर्नारी पतिव्रता। १५१ आत्मनः प्रतिकूलानि, परेषां न समाचरेत्। १५२ दृष्टिपूतं न्यसेत्पादं। १५३ पापी पापेन पच्यते। १५४ नवं नवं प्रीतिकरं नराणाम्। १५५ नवनवगुणरागी, प्रायशः सर्वलोकः। १५६ न हि सर्वत्र पांडित्यं, सुलभं पुरुषे क्वचित्। १५७ बहुभिर्न विरोद्धव्यं। १५८ आत्मा तु पात्रतां नेयः, पात्रमायान्ति संपदः। १५९ बालादपि हितं ग्राह्यम्। १६० अधः कूपस्य खनक, ऊर्ध्वं प्रासादकारकः। १६१ देशमाख्याति भाषणम्। १६२ विद्या मित्रं प्रवासेषु, भार्या मित्रं गृहेषु च। १६३ न तत्र धनिनो यान्ति, यत्र यान्ति बहुश्रुताः। १६४ याचना गतगौरवा। १६५ भिन्ने चित्ते कुतः प्रीतिः। १६६ व्यसनानंतरं सौख्यं, स्वल्पमप्यधिकं भवेत्। १६७ आजन्म उन्मज्जति दुग्धसिन्धौ, तथापि काकः किल कृष्ण एव। १६८ कुरूपता शीलतया विराजते। १६९ कुभोजनं चोष्णतया विराजते। १७० अविवेकः परमापदां पदम्। १७१ गुणलुब्धाः स्वयमेव संपदः। १७२ मौनेन कलहो नास्ति, न भयं चास्ति जाग्रतः। १७३ धनं प्राणहरं त्यजेत्। १७४ चिंता जरा मनुष्याणां। १७५ कृशे कस्यास्ति सौहृदम्। १७६ अव्यवस्थितचित्तस्य, प्रसादोऽपि भयंकरः। १७७ ऋणं कृत्वा घृतं पिबेत्। (चार्वाकसिद्धांत) १७८ पंडितैः सह मित्रत्वं, कुर्वाणो नावसीदति। १७९ अगुणस्य हतं रूपं। १८० सद्यः प्रीतिकरो नादः। १८१ ऋणकर्ता पिता शत्रुः पुत्रः शत्रुरपंडितः। १८२ नास्ति क्रोधसमो वह्निः। १८३ तस्यो तदेव हि मधुरं, यस्य मनो यत्र संलग्नम्। १८४ नीचो वदति न कुरुते, वदति न साधुः करोत्येव। १८५ बीजेनैव भवेद् बीजं, प्रदीपेन प्रदीपकः। १८६ यादृशी

कर्मानुगो गच्छति जीव एकः । ९२ अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् । ९३ गुणाः सर्वे विवेकतः । ९४ कीर्तिर्यस्य स जीवति । ९५ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । ९६ अतृणे पतितो वह्निः स्वयमेवोपशाम्यति । ९७ मूलं हि संसारतरोः कषायाः । ९८ कषायमुक्तिः किल मुक्तिरेव । ९९ कषायमुक्तः परमः स योगी । १०० शरीरं व्याधिमन्दिरम् । १०१ बलमूलं हि जीवितम् । १०२ क्षीणे पुण्ये वृथा बलम् । १०३ अजीर्णे भोजनं विषम् । १०४ ह्यर्थी दोषान्न पश्यति । १०५ मूलं नास्ति कुतः शाखा ? १०६ अपुत्रस्य गृहं शून्यं । १०७ अमोघं देवदर्शनम् । १०८ बुद्धिर्विपद्धारिणी । १०९ नग्नक्षपणकग्रामे, रजकः किं करिष्यति ? ११० आजीवितं तीर्थमिवोत्तमानाम् । १११ अल्पतोयश्चलति कुम्भः । ११२ आहारे व्यवहारे च स्पष्टवक्ता सुखी भवेत् । ११३ आत्मवत्सर्वभूतेषु, यः पश्यति स पश्यति । ११४ विवेकहीनः पशुभिः समानः ११५ उद्योगः पुरुषलक्षणम् । ११६ मुंडे मुंडे मतिर्भिन्ना । ११७ चंदनं न वने वने । ११८ यथा राजा तथा प्रजा । ११९ यथा बीजं तथांकुरः । १२० प्रणामांतः सतां कोपः । १२१ राजा मित्रं केन दृष्टं श्रुतं वा । १२२ विनये शिष्यपरीक्षा । १२३ विद्या विनयेन शोभते । १२४ उत्तमा आत्मना ख्याताः । १२५ न संतोषात्परं सुखम् । १२६ गतानुगतिको लोकः, न लोको परमार्थिकः । १२७ याचको याचकं दृष्ट्वा, श्वानवत्घुर्घुरायते । १२८ कन्याराशिस्थितो नित्यं, जामाता दशमो ग्रहः । १२९ दुस्त्यजं दंभसेवनम् । १३० षट्कर्णो भिद्यते मंत्रः । १३१ यत्र चात्मसुखं नास्ति, न तत्र दिवसं वसेत् । १३२ विद्यारूपं कुरूपानां, क्षमारूपं तपस्विनाम् । १३३ निःस्पृहस्य तृणं जगत् । १३४ बहुरत्ना वसुंधरा । १३५ संमिलने नयनयोर्नहि किंचिदस्ति । १३६ श्रेयांसि बहुविघ्नानि । १३७ पिष्टस्य पेषणं नास्ति, घृष्टस्य घर्षणं नहि । १३८ शुष्कं काष्ठं च मूर्खाश्च, भज्यन्ते न नमंति च । १३९ विषादप्यमृतं ग्राह्यम् । १४० सर्वत्र वायसाः कृष्णा, सर्वत्र हरिताः शुकाः । १४१ सरलता

धनम् । २३१ वादे वादे जायते तत्त्वबोधः । २३२ न तद्ध्यानं न तन्मौनं दया यत्र न विद्यते । २३३ श्रीशालिभद्रादपरो न भोगी, श्रीस्थूलभद्रादपरो न योगी । २३४ बुद्धेः फलं तत्त्वविचारणं च । २३५ संसर्गजा दोषगुणा भवंति । २३६ मन एव मनुष्याणां, कारणं बंधमोक्षयोः । २३७ दानेन पाणिर्न तु कंकणेन । २३८ कल्लोलचपला लक्ष्मीः । २३९ सत्यपूतं वदेद्वाक्यं । २४० वस्त्रपूतं जलं पिबेत् । २४१ मणुआणं धम्मसामग्गी । २४२ भाग्याधिकं नैव नृपो ददाति । २४३ पदे पदे निधानानि । २४४ निर्द्रव्यः क्वापि नार्च्यते । २४५ यस्यास्ति वित्तं स नरः कुलीनः । २४६ सर्वे गुणाः कांचनमाश्रयन्ते । २४७ अन्यायोपार्जितं वित्तं, दश वर्षाणि तिष्ठति । २४८ मोहान्धकारसंहारे, ज्ञानमार्तण्डमंडलम् । २४९ नश्यन्ति पंचपरमेष्ठिपदैर्भयानि । २५० नमस्कारसमो मंत्रो, न भूतो न भविष्यति । २५१ यत्नानुसारिणी विद्या । २५२ दारिद्र्यनाशनं दानं । २५३ औदार्येण विना पुंसां, सर्वाऽन्या निष्फलाः कलाः । २५४ स्त्रीणां श्रीणां च ये वश्यास्तेऽवश्यं पुरुषाधमाः । २५५ स्त्रियः श्रियश्च यद्वश्यास्तेऽवश्यं पुरुषोत्तमाः । २५६ महिलासंगेण नासए बंभं । २५७ विणओ सासणे मूलं । २५८ विद्या विनयेन शोभते । २५९ अयं निजः परो वेति, गणना लघुचेतसां । २६० धर्मं चतुर्धा मुनयो वदन्ति । २६१ ब्रह्मचारी सदा शुचिः । २६२ पुण्यं भावानुसारतः । २६३ भावेषु विद्यते देवो । २६४ शतेषु जायते शूरः, सहस्रेषु च पंडितः । २६५ शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ? । २६६ धर्मेण हीनाः पशुभिः समानाः । २६७ रे दारिद्र्य ! नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः । २६८ कर्तव्यमेव कर्तव्यं, प्राणैः कंठगतैरपि । २६९ गतं न शोचामि । २७० मूर्खस्य हृदयं शून्यं । २७१ धर्मारंभे ऋणच्छेदे कालक्षेपं न कारयेत् । २७२ नास्ति जागरतो भयम् । २७३ वंद्यते यदवंद्योऽपि, तत्प्रभावो धनस्य च । २७४ नार्यः समाश्रितजनं हि कलंकयन्ति । २७५ स्वश्लाघा परनिन्दा तु, लक्षणं निर्गुणात्मनाम् । २७६ परश्लाघा स्वनिन्दा तु, लक्षणं

भावना यस्य, सिद्धिर्भवति तादृशी। १८७ महिलाचरियं न जाणंति। १८८ शान्तिः संन्यासिनां सुधा। १८९ भाग्यं फलति सर्वत्र। १९० योषितां यौवनं धनम्। १९१ यद्भाव्यं तद्भविष्यति। १९२ तृतीयं लोचनं ज्ञानं, द्वितीयो हि दिवाकरः। १९३ लोहो सव्वविणासणो। १९४ सहवासी हि विजानाति, सहवासिविचेष्टितम्। १९५ प्रायेण भूमिपतयः प्रमदा लताश्च, यत्पार्श्वतो भवति तत्परिवेष्टयन्ति। १९६ अपठाः पंडिताः केचित्, केचित्पठितपंडिताः। १९७ अपठा मूर्खकाः केचित्, केचित् पठितमूर्खकाः। १९८ धर्मदंभस्तु दुस्तरः। १९९ साक्षरा विपरीता राक्षसाः। २०० अपरीक्षितं न कर्तव्यं। २०१ स्त्रीणां च हृदये वार्ता, न तिष्ठन्ति कदाचन। २०२ शतं विहाय भोक्तव्यं। २०३ हस्तस्य भूषणं दानं। २०४ पीतनीरस्य किं नाम, मन्दिरादिकपृच्छया। २०५ वीरभोग्या वसुन्धरा। २०६ जितं हि केन? मनो हि येन। २०७ चैत्रस्तु पुष्पपत्राणां कर्ता हर्ता च फाल्गुनः। २०८ यवागूजरणे, जाड्यं, मोदकानां तु का कथा?। २०९ अप्रियस्य च पथ्यस्य, वक्ता श्रोता च दुर्लभः। २१० कालस्य कुटिला गतिः। २११ ब्राह्मणो भोजनप्रियः। २१२ अजापुत्रं बलिं दद्यात्, देवो दुर्बलघातकः। २१३ न धर्मात् परमं मित्रं। २१४ विवेकपरिभ्रष्टानां, भवति विनिपातः शतमुखः। २१५ शीलं हि सर्वस्य नरस्य भूषणम्। २१६ दीपः स्नेह विना, निशा शशि विना, धर्म विना मानवाः। २१७ कुतः कुशलमस्माकं, गलत्यायुर्दिने दिने। २१८ सर्वं खलस्य चरितं मशकः करोति। २१९ विषया विश्ववंचकाः। २२० भावना भवनाशिनी। २२१ यादृशं क्रियते कर्म, तादृशं प्राप्यते फलं। २२२ सद्यः शक्तिहरा नारी, सद्यः शुक्रकरं पयः। २२३ न च धर्मो दयापरः। २२४ नमः पतनशीलाय, सुशलाय खलाय च। २२५ वाचा विचलिता येन, सुकृतं तेन हारितम्। २२६ गर्जन्ति गगने मेघा, मयूरा नृत्यन्ति भूतले। २२७ अहिंसा परमो धर्मः। २२८ सुज्ञेषु किं बहुना? २२९ विरक्तस्य तृणं भार्या। २३० शरीरमाद्यं खलु धर्मसा-

३१८ अलसस्य कुतो विद्या ? । ३१९ विगंधधूपेन जयेत् पिशाचान्, सुगंधधूपेन् जयेद्धि देवान् । ३२० दृष्टानपि सतो दोषान् मन्यन्ते न हि रागिणः । ३२१ स्वहस्तेन च यद् दत्तं, लभ्यते तन्न संशयः । ३२२ धर्मोऽयं धनवल्लभेषु धनदः, कामार्थिनां कामदः । ३२३ कलेवरे मूत्रपुरीषभाजने, लिंपन्ति मूढा विरमन्ति पंडिताः । ३२४ कृपणेन संचिता लक्ष्मीरपरैः परिभुज्यते । ३२५ क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे । ३२६ अंगीकृतं सुकृतिनः परिपालयन्ति । ३२७ रिक्तपाणिर्न पश्येच्च, राजानं देवतां गुरुम् । ३२८ फलेन फलमादिशेत् । ३२९ आस्तन्यपानाज्जननी पशूनाम् । ३३० शीलंपरं भूषणम् । ३३१ प्रकृतिं यान्ति भूतानि, निग्रहः किं करिष्यति । (गीताजी) ३३२ भोगे रोगभयं । ३३३ वैराग्यमेवाभयम् । ३३४ अपूर्वः कोऽपि कामान्धो, दिवा नक्तं न पश्यति । ३३५ दुर्गतौ प्रपतत्प्राणिनो धारयतीति धर्मः । ३३६ मर्दनं गुणवर्धनम् । ३३७ क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः । ३३८ लोकद्वयविरुद्धं च, परस्त्रीगमनं त्यजेत् । ३३९ निर्द्रव्यो धनचिंतया धनपतिस्तद्रक्षणे चाकुलो । ३४० अध्यात्मविद्या विद्यानाम् । ३४१ तीर्थेषु माता तु मता नितान्तम् । ३४२ जिह्वाग्रे मधु तिष्ठति हृदये तु हलाहलम् । ३४३ अजातमृतमूर्खाणां, वरमाद्यौ न चांतिमः । ३४४ तातस्य कूपोऽयमिति ब्रुवाणाः, क्षारं जलं कापुरुषाः पिबन्ति । ३४५ पत्रं नैव यदा करीरविटपे दोषो वसंतस्य किम् । ३४६ नोलूकोऽप्यवलोकते यदि दिवा, सूर्यस्य किं दूषणम् ? । ३४७ चतुरः सखि मे भर्ता यल्लिखति तत् परो न वाचयति । ३४८ तस्मादप्यधिको मे, स्वयमपि लिखितं स्वयं न वाचयति । ३४९ विना गोरसं को रसो भोजनानाम् । ३५० दर्दुरा यत्र वक्तारः, तत्र मौनं हि शोभनम् । ३५१ तावच्च शोभते मूर्खो, यावत् किंचिन्न भाषते । ३५२ स्वगृहे पूज्यते मूर्खः । ३५३ स्थानं प्रधानं न बलं प्रधानं, स्थानस्थितः कापुरुषोऽपि शूरः । ३५४ पुण्यस्य फलमिच्छन्ति, पुण्यं नेच्छन्ति मानवाः । ३५५ पयोऽपि शौण्डिनीहस्ते, मदिरां

सद्गुणात्मनाम् । २७७ गुणैरुत्तमतां याति, न तु जातिप्रभावतः । २७८ समानशीलव्यसनेषु सख्यम् । २७९ युक्तिमद् वचनं यस्य, तस्य कार्यः परिग्रहः । २८० फलं नैव विना तरुम् । २८१ प्रियवाक्यप्रदानेन, सर्वे तुष्यन्ति जंतवः । २८२ त्रिदशा अपि वंच्यंते, दाम्भिकैः किं पुनर्नराः ? । २८३ कृतो हि संग्रहो लोके, काले स्यात् फलदायकः । २८४ स्वकर्मनिरताः सर्वे, नान्यशिक्षामपेक्षन्ते (ते) । २८५ वरं प्राणपरित्यागो, न मानपरिखंडनम् । २८६ एको ध्यानमुभौ पाठं, त्रिभिर्गीतं चतुः पथम् । २८७ सगुणं निर्गुणं नैव, गणयन्ति दयालवः । २८८ अज्ञः सुखमाराध्यः । २८९ असारे संसारे सारं सारंगलोचना । २९० झटिति पराशयवेदिनो हि विज्ञाः । २९१ गृहस्थानां यद् भूषणं तत्साधूनां दूषणम् । २९२ कालस्य त्वरिता गतिः । २९३ कोकिलानां स्वरं रूपं । २९४ प्रस्तावसदृशं वाक्यं, यो जानाति स पंडितः । २९५ दिवा निरीक्ष्य वक्तव्यं, रात्रौ नैव च नैव च । २९६ परदुःक्खे दुःक्खिया विरला । २९७ स्त्रीणां द्विगुण आहारो, कामश्चाष्टगुणः स्मृतः । २९८ मूर्खा निन्दन्ति पंडितान् । २९९ चौरा निन्दन्ति चन्द्रमसम् । ३०० शठं प्रति शाठ्यं कुर्यात् । ३०१ सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ? । ३०२ अन्यस्थाने कृतं पापं, धर्मस्थाने विनश्यति । ३०३ धर्मस्थाने कृतं पापं, वज्रलेपो भविष्यति । ३०४ गुणा गुणज्ञेषु गुणा भवन्ति । ३०५ ज्ञानेन देही द्रविणेन गेही । ३०६ अर्थलुब्धकृतप्रश्नौ सुलभौ तौ गृहे गृहे । ३०७ दाता चोत्तरदाता च, दुर्लभौ पुरुषावुभौ । ३०८ कर्मणो हि प्रधानत्वं । ३०९ अत्युग्रपुण्यपापानामिहैव लभते फलम् । ३१० पुरुषस्य जरा पंथाः । ३११ प्रारभ्यते न खलु विघ्नभयेन नीचैः । ३१२ वैद्यराज ! नमस्तुभ्यं, यमराजसहोदर । ३१३ विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः । ३१४ जलधिजलमपेयं पंडिते निर्धनत्वं । ३१५ मुच्यन्ते नैव कर्म्मणा । ३१६ स्वार्थभ्रंशो हि मुर्खता । ३१७ कुपुत्रेण कुलं नष्टं । ३१८ ग्रामो नास्ति कुतः सीमा, भार्या नास्ति कुतः सुतः ? ।

# कलिकालसर्वज्ञहेमचन्द्रसूरिकृतत्रिषष्ठिगतानि वचनामृतानि

## प्रथमः सर्गः

१ महात्मनां कीर्त्तनं हि श्रेयो निःश्रेसास्पदम् । २९ । २ जडानामुदये हन्त! विवेकः कीदृशो भवेत् ? । ९४ । ३ नहि सीदन्ति कुर्वन्तो देशकालोचितां क्रियाम् । १०१ । ४ अतिदुःखातिसौख्ये हि तस्याः प्रथमकारणम् । १०७ । ५ सर्वंसहा महान्तो हि सदा सर्वंसहोपमाः । १३० । ६ धीमन्तो ह्याशुकारिणः । २२४ । ७ भवन्ति हि महात्मानो गुर्वाज्ञाभङ्गभीरवः । २६७ । ८ नीयन्ते यत्र तत्रैते यान्ति सारणिवन्नृपाः । २९२ । ९ कदली नन्दति कियद् बदरीतरुसंनिधौ ? । ३०६ । १० यदाहार इवोद्गारैर्गिरा भावोऽनुमीयते । ३२५ । ११ स्वार्थभ्रंशो हि मूर्खता । ३३३ । १२ कारणस्यानुरूपं हि कार्यं जगति दृश्यते । ३५४ । १३ प्रत्यक्षेऽपि प्रमाणे किं प्रमाणान्तरकल्पना ? । ४०६ । १४ पूर्वोपार्जितपुण्यानां फलमप्रतिमं खलु । ४११ । १५ पुण्यच्छेदेऽथवा सर्वं प्रयाति विपरीतताम् । ४१५ । १६ अनुकूलनिदेशो हि सतामुत्साहकारणम् । ४२१ । १७ कीदृशं कूपखननं सद्यो लग्ने प्रदीपने ? । ४४९ । १८ आयुःकर्मणि हि क्षीणे नेन्द्रोऽपि स्थातुमीश्वरः । ५१५ । १९ धीराः प्राणावसानेऽपि नहि यान्तीदृशीं दशाम् । ५२३ । २० प्रायेण हि दरिद्राणां शीघ्रगर्भभृतः स्त्रियः । ५३३ । २१ जन्तोर्वज्राहतस्यापि मृत्युर्नात्रुटितायुषः । ५४२ । २२ ......तीर्थानि, सर्वसाधारणानि यत् । ५५३ । २३ मतिर्गत्यनुसारिणी । ५५४ । २४ ......अन्ते, या मतिः सा गतिः किल ।५९९। २५......तापे, रत्यै छाया हि जायते । ६०१ । २६ आसन्ने व्यसने लक्ष्म्या लक्ष्मीनाथोऽपि मुच्यते । ६०४ । २७ प्रकृतिव्यत्ययः प्रायो भवत्यन्ते शरीरिणाम् । ६०५ । २८ भाविकार्यानुसारेण वागुच्छलति

मन्यते जनः। ३५६ क्वचिद् विद्वद्गोष्ठी, क्वचिदपि सुरामत्तकलहः। ३५७ क्वचिद् वीणावाद्यं, क्वचिदपि च हाहेति रुदितम्। ३५८ किं तद्द्रव्यं कोकिलेनोपनीतं, को वा लोके गर्दभस्यापराधः। ३५९ छिद्रेष्वनर्था बहुलीभवन्ति। ३६० शुक! पंजरबंधस्ते, मधुराणां गिरां फलम्। ३६१ पुष्पेषु चंपा, नगरीषु लंका, नदीषु गंगा च नृपेषु रामः। ३६२ भारं स वहते तस्य, ग्रंथस्यार्थं न वेत्ति यः। ३६३ किं न कुर्वन्ति दुर्जनाः?। ३६४ व्याधितस्यौषधं पथ्यं, नीरोगस्य किमौषधैः। ३६५ विषं भवतु वा मा वा, फणाटोपो भयंकरः। ३६६ नष्टं चैव मृतं चैव, नानुशोचंति पंडिताः। ३६७ इच्छति शती सहस्रं। ३६८ लोभः पापस्य कारणम्। ३६९ राजा कालस्य कारणम्। ३७० क्षमया किं न सिध्यति?। ३७१ दुर्बलस्य बलं राजा। ३७२ बलं मूर्खस्य मौनित्वं। ३७३ उपकारः परो धर्मः परो मोक्षो वितृष्णता। ३७४ दुर्मंत्री राज्यनाशाय, सर्वनाशाय दुर्जनः। ३७५ साधूनां दर्शनं पुण्यं। ३७६ मद्यपस्य कुतः सत्यं, दया मांसाशिनः कुतः। ३७७ वनेऽपि दोषाः प्रभवन्ति रागिणां। ३७८ निवृत्तरागस्य गृहं ततो वनम्। ३७९ चिन्तामणिं पातयति प्रमादात्। ३८० कन्यापितृत्वं खलु नाम कष्टम्। ३८१ न करोति यमः क्षांतिम्। ३८२ दोषाश्चापि गुणा भवन्ति हि नृणां योग्ये पदे योजिताः। ३८३ दारिद्र्यं जगदपकारकमिदं केनापि-दग्धं न हि। ३८४ गृह्यन्ते न विभूतिभिश्च ललना दुःशीलचित्ता यतः। ३८५ सत्याद्रज्जूयते फणी। ३८६ ये तु घ्नंति निरर्थकं परहितं ते के न जानीमहे। ३८७ सर्वमेव वृथा तस्य, यस्य शुद्धं न मानसम्। ३८८ त्यजन्ति मित्राणि धनैर्विहीनं। ३८९ परान्नं प्राप्य दुर्बुद्धे, मा प्राणेषु दयां कुरु। ३९० त्रयः स्थानं न मुंचंति, काका कापुरुषा मृगाः। ३९१ विरोधो नैव कर्तव्यः। ३९२ देशत्यागश्च दुर्जनात्। ३९३ शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम्। ३९४ स्त्रीणां गुह्यं न वक्तव्यं, प्राणैः कंठगतैरपि। ३९५ चिन्तया नश्यते बुद्धिः, चिन्तया नश्यते बलम्। ३९६ अर्थानामर्जने दुःखमर्जितानां च रक्षणे।

४६ । ६ खलाः सर्वंकषाः खलु । ५३ ॥ ७ एकत्र विनिवेशेऽपि काचः काचो मणिर्मणिः । ५४ ॥ ८ दुर्लक्षा हि पराशयाः । ५५ ॥ ९ विपरीतं न शङ्कन्ते, कदापि सरलाशयाः । ६३ ॥ १० सत्कारयन्ति ह्यात्मानं कृत्वाऽप्यागांसि मायिनः । १०२ ॥ ११ वन्ध्याऽप्युन्मूल्यते नैव लता या लालिता स्वयम् । १०५ ॥ १२ अस्तमीयुषि पीयूषकरे तिष्ठेन्न चन्द्रिका । १६९ ॥ १३ रोगे त्वेकौषधासाध्ये देयमेवौषधान्तरम् । १७८ ॥ १४ प्रायो महात्मनां पुत्राः स्युर्महात्मान एव हि । १९१ ॥ १५ शरत्काल-वशादिन्दुकराः स्युरधिकश्रियः । २६२ ॥ १६ सर्वतोऽपि शाम्यन्ति सन्तापाः प्रावृडागमात् । २६३ ॥ १७ अर्हतामुदयः केषां न स्यात् सन्तापहारकः । ३३४ ॥ १८ अयोऽपि यानपात्रस्थं पारं प्राप्नोति वारिधेः । ३३६ ॥ १९ स्वाम्यग्रे नासनात्ययः । ३८४ ॥ २० नैसर्गिकी हि भवति द्युसदां कामरूपिता । ३७९ ॥ २१ उपायनं हि प्रथमं प्रणामः स्वामिदर्शने । ४०८ ॥ २२ भक्तौ न पुनरुक्तता । ४०९ ॥ २३ तादृक् स्वाम्यासिजानन्दः शक्यते केन गोपितुम् ? । ५६८ ॥ २४ अपुनर्जन्मनो जन्म दुःखच्छिद् विश्वजन्मिनाम् । ६०३ ॥ २५ स्वयम्भुरमणाम्भोधेर्मातुमम्भांसि कः क्षमः ? । ६०९ ॥ २६ आज्ञा ह्याज्ञाप्रचण्डानां वचसा सह सिद्धयति । ६२३ ॥ २७ नृणां लोकोत्तराणां हि बाल्यं वपुरपेक्षया । ६६४ ॥ २८ तुलमप्यल्पभारत्वादाकाशमनु-धावति । ७३८ ॥ २९ जाताऽपत्यानि युग्मानि जीवन्ति कियदेव हि ? । ७४३ ॥ ३० ....परार्थाय, महतां हि प्रवृत्तयः । ८८१ ॥ ३१ सद्वेदनीयमपि हि न कर्म क्षीयतेऽन्यथा । ८८२ ॥ ३२ मर्यादोल्लङ्घिनां लोके राजा भवति शासिता ।८९७ ॥ ३३ विश्वस्य सुखसृष्ट्यै हि महापुरुषसृष्टयः । ९५३ ॥ ३४ सर्वकल्पद्रुमस्थाने ह्येकः कल्पद्रुमः प्रभुः । ९५५ ॥ ३५ ...... पात्रे, विद्या हि शतशाखिका । ९६१ ॥ ३६ ध्रुवो ह्यघ्ना महत्कृतः । ९६९ ॥ ३७ अन्तरेणोपदेष्टारं पशवन्ति नरा अपि । ९७३ ॥ ३८ एकैव दण्डनीतिर्हि सर्वान्यायाहिजाङ्गुली । ९७९ ॥

जल्पताम् । ६०६ । २९ नालभ्यं लभ्यते क्वचित् । ६१८ । ३० व्याधेरन्यस्य न ह्यन्यदौषधं जातु शान्तिकृत् । ६४१ । ३१ न ह्यज्ञातस्य रोगस्य चिकित्सा जातु युज्यते । ६४६ । ३२ अन्यानुभूतं नह्यन्यो जनो जानाति जातुचित् । ६८१ । ३३ अस्वातन्त्र्यं कुलस्त्रीणां धर्मो नैसर्गिको यतः । ६८४ । ३४ ......नयज्ञा हि, प्रस्तुतार्थेषु तत्पराः । ६९७ । ३५ प्रव्रज्या दीपिकेवात्तमात्रापि हि तमच्छिदे । ७०९ । ३६ ......तैर्हि किं नाभेद्यं जलैरिव ? । ७१२ । ३७ एकचिन्ताविपन्नानां गतिरेका हि जायते । ७१६ । ३८ ......कायानपेक्षा हि मुमुक्षवः । ७३५ । ३९ ...विचिकित्सन्ति, न हि जातु चिकित्सकाः । ७६० । ४० योग्यमुग्रस्य हि व्याधेः शान्त्यामत्युग्रमौषधम् ७६२ ४१ सर्वत्राद्रोहता सताम् । ७६६ । ४२ न वज्रपञ्जरेऽप्यस्ति, स्थानं रुष्टे बलीयसि । ७७३ । ४३ ......अधमस्था-नमधमानां हि युज्यते । ७७४ । ४४ नास्था कापि हि तादृशाम् । ७७७ । ४५ न हि मोहो महात्मनाम् । ७८८ । ४६ न सामन्यफलं तपः । ७८९ । ४७ ...अच्यवनं, नहि मोक्षं विनाक्वचित् । ७९० । ४८ स्नेहः प्राग्भवसम्बद्धो, ह्यनुबध्नाति बन्धुताम् ॥ ७९६ ॥ ४९ प्रादुर्भवन्ति महतां स्वयमेव यतो गुणाः ॥ ७९९ ॥ ५० आत्मानुरूपः कर्तव्यः सारथिर्हि महारथैः ॥ ८०८ ॥ ५१ सम्पद्धि पुण्यमानेनाम्भोमानेनेव पद्मिनी ॥ ८११ ॥ ५२ भृत्याः स्वाम्यनुगामिनः ॥ ८३५ ॥ ५३ क्षयोपशमवैचित्र्याच्चित्रा हि गुणसम्पदः ॥ ८३७ ॥ ५४ मुमुक्षवो निराकाङ्क्षा वस्तुपूपस्थितेष्वपि ॥ ८८१ ॥ .

## द्वितीजः सर्गः

१ प्रजा राजानुयायिनी । १४ । २ व्याघ्रा अपि पलायन्ते ज्वलज्ज्वलनदर्शनात् । २३ । ३ वणिजो लोकसामान्येऽप्यर्थे साऽऽशङ्कवृत्तयः । ३५ । ४ मन्दभाग्यतया पुंसां गुरवः स्युरनीदृशाः । ४४ । ५ कृतं तेन कृतेनापि गुर्वाज्ञा यत्र लङ्घ्यते ।

युद्धार्ज्या यज्जयश्रियः । ५०९ ॥ १९ सेवावृत्तिर्न लज्जायै स्वामिवत्स्वामिनन्दने । ५१३ ॥ २० गृहागते स्वामिनि हि किमदेयं महात्मनाम् ? । ५३५ ॥ २१ उपचारः समर्थानां सद्यो भवति सिद्धये । ५४० ॥ २२ राज्यं तपसाऽऽप्तमपि तपसैव हि नन्दति । ६७३ ॥ २३ रत्नं पञ्चदशं ह्याज्ञा चक्रिणः कार्यसिद्धिषु । ७०० ॥ २४ गृहोद्द्योतकरो दीपः किं नो द्योतयते घटम् ? । ७९२ ॥ २५ विनीतानामलङ्घ्या हि मर्यादा स्वामिदर्शिता । ८१९ ॥ २६ अतृप्ता एव कुर्वन्ति सेवां मानविघातिनीम् । ८२४ ॥ २७ किमार्त्तः कुरुते नहि ? । ८४० ॥

## पञ्चमः सर्गः

१ उपादेया शास्त्रलोकव्यवहारानुगा हि गीः । २३ ॥ २ शूरैरपि वार्त्तितव्यं गुरौ हि सभयैरिव । १०० ॥ ३ ...सुस्वामी, गृह्णाति स्खलितं नहि । १०५ ॥ ४ विमृश्यकारिणः सन्तः किं दूष्यन्ते खलोक्तिभिः ? । १३७ ॥ ५ यदवद्धमुखो जनः । १४४ ॥ ६ किं नाम भेषजं कुर्याद् विकारे सान्निपातिके ? । २१६ ॥ ७ तेषां तेजो हि जीवितम् । २४३ ॥ ८ एकदाऽपि सती लुप्तशीला स्यादसती सदा । २४५ ॥ ९ युक्तं वचोऽपरस्यापि मन्यन्ते हि मनीषिणः । २६२ ॥ १० अहो ! अखण्डप्रसराः कषाया महतामपि । २७५ ॥ ११ सर्वेऽपि मणिताभाजः कर्करा अपि रोहणे । २९३ ॥ १२ वायुतोऽपि भृशायन्ते समरोत्कण्ठिताः खलु । २९७ ॥ १३ स्वतोऽपि ह्यधिकां रक्षां भटाः कुर्वन्ति वाहने । ३३६ ॥ १४ हेषा हि जयसूचिनी । ३३८ ॥ १५ सरथ्या अपि हि रथा निष्फला सारथिं विना । ३४४ ॥ १६ ...गरीयांसः, कार्ये मुह्यन्ति न क्वचित् । ३६४ ॥ १७ लल्ला अपि हि बालानां युक्ता एव गिरो गुरौ । ३९७ ॥ १८ अयोऽपि हेमीभवती स्पर्शात् सिद्धरसस्य हि ।

## तृतीयः सर्गः

१ याञ्चामेकान्तभक्तानां स्वामिनः खण्डयन्ति न ॥ ७१ ॥ २ निर्ममा हि न लिप्यन्ते कस्याप्यैहिकचिन्तया ॥१३९॥ ३ ......अचिन्त्यप्रभावाः प्रभवः खलु ॥ २९४ ॥ ४ नैकत्र, तिष्ठेत् छद्मस्थतीर्थकृत् ॥ ३३० ॥ ५ यत् कुर्वन्ति महान्तो हि तदाचाराय कल्पते ॥ ५३३ ॥ ६ गुरूपदेशः साक्ष्येव प्रायेण लघुकर्मणाम् ॥ ६५३ ॥ ७ नहि भोगफले कर्मण्यभुक्ते भवति व्रतम् ॥ ६५५ ॥

## चतुर्थः सर्गः

१ मन्यन्ते क्षत्रियाः ह्यस्त्रं प्रत्यक्षमधिदैवतम् ॥ २ ॥ २ पूजितैः पूज्यमानो हि केन केन न पूज्यते ? ॥ १३ ॥ ३ यथाविधिविधिज्ञा हि विस्मरन्ति विधिं नहि ॥ ८८ ॥ ४ ...महान्तो हि, सेवोपनतवत्सलाः ॥ १५० ॥ ५ लोके महत्त्वदानाय महन्त्यात्मीयमीश्वराः ॥ १९४ ॥ ६ प्रभोः प्रसादचिह्नं हि प्राभृतादानमादिमम् ॥ २११ ॥ ७ आदौ सामन्तमात्रस्याप्युचिताः प्रतिपत्तयः ॥ २१४ ॥ ८ अलुब्धा अपि गृह्णन्ति भृत्यानुग्रहहेतुना ॥ २३४ ॥ ९ महान्तो नावजानन्ति नृमात्रमपि संश्रितम् ॥ २३५ ॥ १० ...कृतार्थां अपि भूभुजः । न त्यजन्ति दिशोर्दण्डं चिन्हं दिग्विजयश्रियः ॥ २४४ ॥ ११ प्रभवः प्रणिपातेन गृहोताः किं न कुर्वते ? ॥ २४७ ॥ १२ सिंहः प्रयाति यत्रापि तस्यौकः स्वं तदेव हि ॥ २८४ ॥ १३ ...सर्वास्तपोमूला हि सिद्धयः ॥ २८७ ॥ १४ महान्तः शक्तिवन्तोऽपि प्रथमं साम कुर्वते ॥ २९० ॥ १५ मनागपसरत्येव प्रजिहीर्षुर्गजोऽपि हि ॥ २९४ ॥ १६ ...उत्तमानां हि, प्रणामावधयः क्रुधः ॥ ४५७ ॥ १७ ...कार्यसिद्धेस्तपो मङ्गलमादिमम् ॥ ४६४ ॥ १८

## द्वितीयपर्व प्रथमः सर्गः

१ चिकित्स्यते हि निपुणैरङ्गोद्भवमपि व्रणम् । २७ ॥ पात्रे बहुफलं तद्धि । ३८ ॥ ३ गौः पालकविशेषेण कामं दुग्धे विशिष्यते । १४ ॥ ४ ....निश्चिते कार्ये नालसन्ति मनस्विनः । १४३ ॥ ५ चक्षुष्मानपि किं कुर्यादन्धकारे प्रसृत्वरे ? । १५१ ॥ ६ गुर्वाज्ञा हि कुलीनानां विचारमपि नार्हति । १८८ ॥ ७ गुर्वाज्ञाकरणं सर्वगुणेभ्यो ह्यतिरिच्यते । १९४ ॥ ८ पितृतः कः परो लोकेऽनुल्लङ्घ्यवचनो भवेत् ? । १९५ ॥ ९ शक्रोऽपि हि श्रियासक्तः किं पुनर्मानवो जनः ? । २१८ ॥ १० अगृघ्नोरनुगा लक्ष्म्यः । २२० ॥

### द्वितीयः सर्गः

१ महापुमांसो गर्भस्था अपि लोकोपकारिणः । १०६ ॥ २ जायते घृष्यमाणाद्धि दहनश्चन्दनादपि । २३८ ॥ ३ कामरूपा दिवौकसः । ३३८ ॥

### तृतीयः सर्गः

१ नह्यर्हन्तः स्तनन्धयाः । २ त्रिज्ञाना हि स्वतो जिनाः । २२ ॥ ३ भावतोऽपि यतिर्यतिः । ९०॥ ४ सतां ह्यलङ्घ्या गुर्वाज्ञा । ९३ ॥ ५ निर्धनस्य सुभिक्षेऽपि दुर्भिक्षं पारिपार्श्विकम् । ८६६ ॥ ६ ....वाचां, ह्याप्ताधीना प्रमाणता । ९०० ॥ ७ धर्मे धर्मोपदेष्टारः साक्षिमात्रं शुभात्मनाम् । ९०७ ॥ ८ स्वर्णीस्यातां सिद्धरसात् सीसकत्रपुणी अपि । ९०८ ॥

३९८ ॥ १९ कार्यं हि खलु कारणात् । ४५१ ॥ २० सति भूयसि किं तैले शैलाभ्यङ्गो विधीयते ? ४६० ॥ २१ धनमात्रकृते हन्त ! परद्रोहं करोति कः ? । ४९० ॥ २२ विचित्रा हि रणे गतिः । ५४७ ॥ २३ ...भक्तिर्ह्यपदेऽपीक्ष्यते भयम् । ५५५ ॥ २४ स्वाम्याज्ञा हि बलीयसी । ५६४ ॥ २५ कस्य दुःखाकरो न स्याद् महतां ह्यापदागमः ? । ६३१ ॥ २६ नोज्झन्ति मानिनो मानं यावज्जीवं मनागपि । ६६१ ॥ २७ तिरोहितः काण्डपटेनाप्यर्थो न हि दृश्यते । ७८१॥ २८ अमूढलक्ष्या अर्हन्तः समये ह्युपदेशकाः । ७८४ ॥

## षष्ठः सर्गः

१ युज्यन्ते हि मृगैर्मृगाः ॥ ३७ ॥ २ कालादनूपरत्वं हि व्रजत्यूषरभूरपि ॥ ३८ ॥ ३ यान्ति दीपस्य सम्पर्काद् वर्त्तयोऽपि हि दीपताम् ॥ १७४ ॥ ४ कामरूपा हि नाकिनः ॥ २१५ ॥ ५ भक्तौ स्नेहे च सतां कर्त्तव्यं तुल्यमेव हि॥ २२४॥ ६ कर्म भोगफलं कोऽपि नान्यथा कर्त्तुमीश्वरः ॥ २३६ ॥ ७ पूजितैः पूजितो यस्मात् केन केन न पूज्यते ॥ ? ॥ २४६ ॥ ८ हस्तिभिर्हस्तिभारो हि वोढुं शक्येत नापरैः ॥ २५४ ॥ ९ दिने दिने कल्पतरुर्ददानो न हि हीयते ॥ २६१ ॥ १० शशिनं पश्यतां दृष्टिर्मन्दाऽपि हि पटूयति ॥ २६३ ॥ ११ क्षौमस्य क्षालितं द्विस्त्रिर्ह्यतिनैर्मल्यकारणम् ॥ ४३८ ॥ १२ सर्वसाधारणं तपः ॥ ४४२ ॥ १३ वेद्यते वेदना नैव हर्षेणेव शुचाऽपि यत् ॥ ४६६ ॥ १४ न तापो मानसो जातु सुधावृष्ट्यापि शाम्यति ॥ ४६९ ॥ १५ समा हि समदुःखानां चेष्टा भवति देहिनाम् ॥ ४९७ ॥ १६ यत्र तत्र प्रसक्तानां प्रभूणां को हि बाधकः ? ॥ ७१३ ॥ १७ महद्भ्यो महतामृद्धिमपि शंसन्त्यचेतनाः ॥ ७३९ ॥ १८ स्वामिवत् स्वामिपुत्रेऽपि भक्ता हि प्रतिपत्तिदाः ॥ ७४० ॥ १९ न जातु वन्द्यते प्राप्तकेवलोऽपि ह्यदीक्षितः ॥ ७४४ ॥





सुतवियोगजम् । १७२ ॥ ४ यत्राकृतिस्तत्र गुणा इत्यर्भा अप्यधीयते । २२६ ॥ ५ युक्तं प्राणिषु कारुण्यं सर्वेष्वपि महात्मनाम् ३३१ ॥ ६ नारीपरिभवं राजन् सहन्ते पशवोऽपि न । ३८९ ॥ ७ स्वाधीनं ह्यात्मसाधनम् । ४४५ ॥ ८ जीवन्ति च म्रियन्ते च समं पत्या पतिव्रताः ॥ ४४७ ॥ ९ विमृश्य हि विधातव्यमल्पीय्येऽपि प्रयोजने ॥४५३॥ १० नालं दग्धुं कक्षमग्निर्विना वायुं ज्वलन्नपि ॥ ४८५ ॥ ११ न हि प्रमाणे प्रत्यक्षे प्रमाणान्तरकल्पना ॥ ५०९ ॥ १२ अदर्शितपथं याति पायो ह्यन्धवदुत्पथे ॥ ५४२ ॥ १३ निसर्गेण विनीतस्य शिक्षा सद्भित्तिचित्रवत् ॥ ५५५ ॥ १४ सोऽध्वा यो महदाश्रितः ॥ ५८२ ॥ १५ सर्वत्र कुशलं सताम् ॥ ५९५ ॥ १६ तुल्या भूस्तुल्यकर्मणाम् ॥ ५९७ ॥

## तृतीयपर्व प्रथमः सर्गः

१ विवेकिनां विवेकस्य फलं ह्यौचित्यवर्त्तनम् ॥ ९ ॥ २ नदीवन्न नदीभर्तुरुत्सेकाय घनागमः ॥ १० ॥ ३ पात्रोपकारे प्रथमं महतां यदुपक्रमः ॥ ३७ ॥

## द्वितीयः सर्गः

१ ...महतां यस्मात्, पुण्यं पुण्यानुबन्धकम् ॥ ९ ॥ २ सरिदम्भोभिरम्भोधिः किं माद्यति मनागपि ? ॥ ३६ ॥ ३ पतिव्रतात्वे व्रतवदतिचारस्य भिरवः ॥ ४६ ॥

## तृतीयः सर्गः

१ प्रतिमायाः प्रभावोऽधिष्ठातृदेवोचितः खलु ॥ ५३ ॥ २ दैवस्य विषमा गतिः ॥ १४५ ॥ ३ कोकिलायाः खल्वपत्यं

## चतुर्थः सर्गः

प्रयान्ति ह्युत्तमस्थाने भूषणान्यपि भूष्यताम् ॥ ३२ ॥ २ ...स्वामिदत्तमाहात्म्याः खलु सेवकाः ॥ ८२ ॥ ३ ...भक्तेष्वीशा हि प्रतिपत्तिदाः ॥ १०८ ॥ ४ महात्मनां महर्द्धीनामुत्सवा हि पदे पदे ॥ १३५ ॥ ५ ...कृत्यं, महान्तो न त्यजन्ति हि ॥ १४६ ॥ ६ तादृशामभियोगे हि कम्पन्ते पर्वता अपि ॥ १४७ ॥ ७ सेवनीयाश्चक्रिणो हि देवैरपि नरैरिव ॥ १५० ॥ ८ कृष्टाश्चेव्य इवायान्ति शक्त्या शक्तिमतां श्रियः । १७५ ॥ ९ प्रायस्तपोग्राह्या हि देवताः । १७८॥ १० प्रणिपातावसानो हि कोपाटोपो महात्मनाम् । २३९ ॥ ११ ....नास्ति, विदेशः कोऽपि दोष्मताम् । २४५ ॥ १२ तुष्यन्ति हि महीयांसः सेवामन्या गिराऽपि हि । २७२ ॥ १३ अनुत्सुकानां शक्तानां लीलापूर्वाः प्रवृत्तयः । २८७ ॥ १४ महात्मानः प्रणयिनां प्रणयं खण्डयन्ति न । ३५१ ॥

## पञ्चमः सर्गः

१ ....निजे सद्मन्युत्कण्ठा हि वलीयसी । १३ ॥ २ विमर्शः क्वाल्पमेधसाम् ? । १४ ॥ ३....सामवागम्भः, कोपाग्नेः शमनं सताम् । १५५ ॥ ४ लोके स्यादनुकम्पायै सागसामपि निग्रहः । १७७ ॥

## षष्ठः सर्गः

१ अभ्रादपि पतितानां शरणं धरणी खलु । १२ ॥ २ कालो हि दुरतिक्रमः । १३६ ॥ ३ पितुर्मातुश्च तुल्यं हि दुःखं

३ यादृशस्तादृशो वाऽपि पूजनीयः पिता सताम् ॥ २१३ ॥ ४ विसंवादो न धीमताम् ॥ २२६ ॥ ५ नह्यासाश्चाटुभाषिणः ॥ २६५ ॥ ६ बलिनो यद् बलिभ्योऽपि, बहुरत्ना हि भूरियम् ॥ २७६ ॥ ७ स्वामिनि व्यग्रचित्ते हि नावकाशः कलावताम् ॥ २९० ॥ ८ न श्वाऽप्यास्कन्द्यते यस्मात् स्वामिनः किं पुनः पुमान् ? ॥ २९६ ॥ ९ दूतदृष्टयनुसारेण प्रवर्तन्ते हि भूभुजः ॥२९८॥ १० ...न जात्या कोऽपि कस्यचित् स्वामी वा सेवको वाऽपि शक्त्यधीनमिदं खलु । ३०० ॥ ११ स्वप्रशंसेवान्यनिंदा सतां लज्जाकरी खलु ।३०१॥ १२ राजवद्राजपुत्रोऽपि मान्यो राजानुजीविनाम् ।३०४॥ १३ दन्तिनां दन्तघातस्य स्थानं नैरण्डपादपः। ३१७ ॥ १४ दूता हि प्रतिरूपाणि भूपानां सञ्चरन्त्यमी । ३२७ ॥ १५ यत उत्तिष्ठति शिखी निर्वाप्यस्तत एव हि । ३२८॥ १६ कवलः शक्यते क्षेप्तुं, नाक्रष्टुं हस्तिनो मुखात् । ३४० ॥ १७ इङ्गितज्ञा हि सेवकाः । ३४६ ॥ १८ उग्राणां स्वामिनां ह्यग्रे कोऽन्यथा वक्तुमीश्वरः । ३४७ ॥ १९ प्रमाद्यन्ति शुभात्मानो न हि ज्ञात्वा मनागपि । ४३० ॥ २० सर्वस्याभ्यागतो गुरुः । ४७० ॥ २१ दूतो हि प्रथमो नये । ४७२ ॥ २२ न शिरो नयने विना । ५०२ ॥ २३ प्रमाणं स्वामिशासनम् । ५०९ ॥ २४ विचित्रा हि रणे गतिः । ५५० ॥ २५ महागजोऽपि ह्यज्ञात्वा धावन् पङ्के निमज्जति । ५५२ ॥ २६ मन्यावन्तर्मधुनीव चेतनास्तु कुतो नृणाम् ? । ५५५ ॥ २७ प्रेमास्थानेऽपि भीप्रदम् । ५७५ ॥ २८ पुण्याकृष्टं स्वयं सर्वं किं न स्याद् महात्मनाम् । ५८८ ॥ २९ ...सर्पघर्षं हि, सर्पो जानाति नापरः । ६१७ ॥ ३० श्रीछिद्रेऽञ्जनलेशोऽपि धौतस्य श्वेतवाससः । ६३६ ॥ ३१ धीरा अपि हि किं कुर्युर्भूचरा व्योमचारिषु ? । ६४२॥ ३२ निजेनैव हि चक्रेण हन्यन्ते प्रतिचक्रिणः । ७४८॥ ३३ क्षत्रियाणां क्रमो ह्येष युद्धं स्वाम्याज्ञया खलु । ७५९ ॥ ३४ फलन्ति हि महात्मानः सेविताः कल्पवृक्षवत् । ७६५ ॥ ३५ भक्तिमन्तोऽप्रमादेनायुक्तेभ्योऽप्यतिशेरते । ७९८ ॥ ३६ कर्मणां फलवत् पाको यदुपायात् स्वतोऽपि च । ८३० ॥ ३७ रज्य-

काक्या पुष्टोऽपि कोकिलः ॥ १७६ ॥

## चतुर्थः सर्गः

१ आश्रीयन्ते मृत्युकाले पक्षाभ्यामिव कीटिकाः ॥ १६० ॥ २ अपथ्यान्यपि यत्नेन स्पृहयन्ति मुमूर्षवः ॥ १६१ ॥ ३ शिष्या गुरूणां कूपानामाहावा इव तत्क्रियाः ॥ १७८ ॥

## पञ्चमः सर्गः

१ न स्थानव्यत्ययो जातु सामान्यस्यापि पर्षदि ॥ ८२ ॥

## षष्ठः सर्गः

१ आधारबुद्ध्या गगनस्योत्पाद इव टिट्टिभः ॥ ३९ ॥ २ दिशोऽश्नुतेऽभ्रलेशोपि पौरस्त्यानिलसङ्गमात् ॥ ४० ॥ ३ अन्यत्राप्युत्सवायैव जातोऽर्हन्, किं पुनर्गृहे ? ॥

## अष्टमः सर्गः

१ विहायसो महत्त्वे हि नोपमानं भवेत् परम् ॥ २४ ॥

## चतुर्थपर्व प्रथमः सर्गः

१ प्रष्टुमर्हो न सामान्यजनो हि स्वप्नमुत्तमम् ॥ १७४ ॥ २ श्रेयान् स देशो नो यत्र श्रूयन्ते दुर्जनोक्तयः ॥ १०८ ॥

सराव इव वर्धते । ३१५॥ १० तरवोऽपि निधिं प्राप्य पादैः प्रच्छादयन्ति यत् । ३१७ ॥ सप्तमः सर्गः—१ जिनशासनबाह्यानां विवेकः कीदृशो नृणाम् ? । ५७ ॥ २ हस्त्यश्वे राजपुत्राणां कौतुकं सर्वतोऽधिकम् । ९० ॥ ३ सर्वं ह्येकांशदर्शनात् । १२३॥ ४ बलिभ्योऽपि छलं बलिः । २२९॥ ५ भर्तृगृह्या हि योषितः । २६५ ॥ ६ क्षत्रिया हि रणप्रियाः । २६६ ॥ ७ विक्रान्तो हि श्रियां पदम् । २८२ ॥ ८ याञ्चा ह्यमोघा महताममोघं च ऋषेर्वचः । २९० ॥ ९ मिथ्या न खलु भाषन्ते महात्मानः कदाचन । ३५४ ॥ १० क्षणिकं सर्वमेव हि ।३६४

## पञ्चम पर्व प्रथमः सर्गः

१ दुर्जया विषयाः खलु । २८ ॥ २ प्रज्ञायाः किं न गोचरम् ? । ३१॥ ३ विदेशो विदुषां हि कः ? । ३३ ॥ ४ क्व नार्घन्त्युज्ज्वला गुणाः । ३९ ॥ ५ आराध्योऽतिथिमात्रोऽपि किं पुनः स पिताऽतिथिः ? । ६२ ॥ ६ महात्मानः प्रकृत्याऽपि शपथच्छेदकातराः । ६९ ॥ ७ दण्डसाध्यास्तु दुर्मदाः । ८६ ॥ ८ न मनागपि जीवन्ति कुलनार्यः पतिं विना । ८९ ॥ ९ ...नोत्कण्ठा, विलम्बं सहते क्वचित् । १५९ ॥ १० पूजाऽर्होऽतिथिमात्रेऽपि । १७३ ॥ ११ निराम्नायस्य वचसि श्रद्धा न प्रत्ययं विना । १८७ ॥ १२ ...विवेको हि, स्मरार्त्तानां कियच्चिरम् ? । १९५ ॥ १३ अवश्यं भावी यो ह्यर्थो यत्र तत्र स नान्यथा । २०१ ॥ १४ न भावि क्वचिदन्यथा । २१८ ॥ १५ निकाचितानामपि यत् कर्मणां तपसा क्षयः । २१९ ॥ १६ स्वाम्युदर्काय धीमन्तो यान्ति स्वाम्यन्तरेऽपि हि । २३१ ॥ १७ अभियोगो हि योगाय क्षेमे सति विपश्चिताम् । २५३ ॥ १८ दैवं हि बलवत् परम् । २६३ ॥ १९ धैर्य–वीर्यविहीनानां छलमेव हि पौरुषम् । ३१० ॥ २० न हीन्द्रकुलिशस्यापि

न्यन्येऽपि गीतेन किं पुनस्तद्विदग्रणीः ? । ८७० ॥ ३८ विषयाक्षिप्तमनसां गलेद्धि स्वामिशासनम् । ८७५ ॥ ३९ दुर्लङ्घ्यं शासनं ह्युग्रशासनानां महीभुजाम् । ८८२ ॥ ४० अनुष्ठाने प्रवर्त्तन्ते ज्ञात्वा खलु महाशयाः । ९०५ ॥ द्वितीयः सर्गः—१ कस्तृप्येदमृतस्य हि ? । ६६ ॥ २ प्राणान् रक्षेद् धनैरपि । १३६ ॥ ३ राज्ञां भवन्ति दूता हि यथावस्थितवादिनः । १६०॥ ४ शूराणां ह्यभिगमनं सुहृदीवासुहृद्यपि । १६४ ॥ ५ तस्य श्रीर्यस्य विक्रमः । १८३ ॥ ६ सञ्जायते व्याधिरिव द्विषन् विषमुपेक्षितः । २२३ ॥ ७ सर्वोऽपि सापराधो हि छलमन्विष्यते यदा । २३० ॥ ८ ...जीवन्नरो भद्राणि पश्यति । २६९ ॥ तृतीयः सर्गः—१ पित्राज्ञा ह्यर्हतामपि । ५२ ॥ २ द्यूतान्धानां कुतो मतिः ? । ७८ ॥ ३ पक्षोद्गमः पीलिकानामिव पर्यन्तकारणम् । विपरीता मतिः पुंसां भवेद् दैवे पराङ्मुखे । ११९ ॥ ४ वीरभोग्या हि भूरियम् । १२९ ॥ ५ न हि केसरिबूत्कारं श्रुत्वा तिष्ठन्ति वारणाः । १३९ ॥ ६ काकानां तस्कराणां च नश्यतां का ननु त्रपा । १५१ ॥ ७ नाऽभूत् पत्युः कलत्रं या सा स्यादुपपतेः कथम् ? । १६४ ॥ चतुर्थः सर्गः—१ बहुरत्ना वसुन्धरा । १२३ ॥ २ ओजायन्तेऽनोजसोऽपि दूताः स्वाम्योजसा खलु । २३८ ॥ ३ आदत्ते ह्यम्बु यद् भानुः पुनरुज्झति भूरि तत् । १४५ ॥ ४ श्रियः स्वामिनि रुष्टे हि न तिष्ठन्ति भयादिव । १४६ ॥ ५ तेजः प्रमाणं वीराणां तेजसां कीदृशं वयः ? । १८१ ॥ ६ व्यालोऽपि गरलं मुक्त्वा शाम्येन्न पुनरन्यथा । १८२॥ पञ्चमः सर्गः—१ इष्टस्य दर्शनेनापि शं स्यात् स्पर्शेन किं पुनः ? । १०१ ॥ २ सर्वार्थसाधकः कायश्चलत्येष हि भोजनात् । १०७ ॥ ३ नदीमध्यस्थितानां हि किं करोति दवानलः ? । १४९ ॥ ४ रसान्तरेण हि रसो बाध्यते बलवानपि । १५१ ॥ ५ दोरपेक्षैव दोष्मताम् । १५७॥ ६ सहस्रधा हि फलति व्यवसायो महात्मनाम् ।१९०॥ ७ उपेक्ष्य लोष्ठक्षेप्तारं लोष्ठं दशति मंडलः मृगारिः शरमुत्प्रेक्ष्य शरक्षेप्तारमृच्छति । २४३ ॥ ८ कुटिलादुद्विजन्ते हि जन्तवः पन्नगादिव । ३०१॥ ९ मूले लघीयांस्तल्लोभः

रसेऽपि हि । १०८ ॥ ४ पुत्रोद्वाहोत्सवानां हि न तृप्यन्ति महर्द्धयः । ११० ॥ ५ महतामवतारो हि विश्वपालनहेतवे । ११२ ॥ ६ निकाचितं भोगफलं भोग्यं कर्मार्हतामपि । ११३ ॥ ७ पूजामाचारपूज्यस्य पूज्या अपि हि कुर्वते । १२७ ॥ ८ सर्वमप्यृजु दोष्मताम् । १७० ॥ ९ सर्वत्रास्खलितो मार्गः प्रभूणां स्रोतसामिव । १७२ ॥ १० विषं वैरी ह्युपेक्षितः । १७९ ॥ ११ भक्तिग्राह्या हि देवताः । २०९ ॥ १२ उन्मूढे हि क्षुते प्रायेणैकः शरणमर्यमा । २१२ ॥ १३ दुष्करं नास्ति दोष्मताम् । २४६ ॥ १४ मूलेषु हि विशुष्केषु शुष्क एव महीरुहः । ३२२ ॥ १५ हन्यते हैमनं जाडयं न विना ज्वलितानलम् । ३२३ ॥ १६ वीरैः कुट्टेष्टकः पूर्वं वप्रः कैः कैर्न खण्डयते । ३२५ ॥ १७ पूर्वकर्मानुसारेण जायते जन्मिनां हि धीः ।३८६॥ १८ जीवन्त्यप्येकदाऽऽप्तेन धान्यानि स्वातिवारिणा । ३९५ ॥ १९ अन्योऽन्यशुभचेष्टा हि शुभोदर्का द्वयोरपि । ४१२ ॥ २० सुलक्ष्यं हि परस्वान्तमिङ्गिताकारवेदिभिः । ४१३ ॥ २१ नहि मिथ्या कुलीनवाक् । ४३८ ॥ २२ प्रतिज्ञा च कुलीनानां न मुधा जातु जायते । ४३९ ॥ २३ ...शस्यमानं हि, दुःखं प्रायः प्रशाम्यति । ४५३ ॥ २४ ...जीवन् हि, नरो भद्राणि पश्यति । ४५७ ॥ २५ प्रयाति सात्विकानां हि दैवमप्यनुकूलताम् । ४८३ ॥ २६ सुप्रयुक्तस्य दम्भस्य ब्रह्माऽप्यन्तं न गच्छति । ५०५ ॥ २७ अन्यं हि दुःखितं दृष्ट्वा समाश्वसिति दुःखितः । ५२१ ॥

## षष्ठ पर्व प्रथमः सर्गः

१ यद्वोत्पन्ने तीर्थनाथे सदोत्सवमयं जगत् । ४९ ॥ २ महात्मानो हि कुर्वन्ति सेवकेष्वपि सत्कृतिम् । ५५ ॥ द्वितीयः सर्गः—१ आत्मनीनो हि सर्वोऽपि स्तोकेच्छुः कोऽपि नात्मनः । ११० ॥ २ तिष्ठन्ति न चिरं जातु मानिनः श्वसुरौकसि ।



स्फूर्त्तिः केवलिपर्षदि । ३६७॥ २१ स्नेहोऽयं पूर्वसंस्कारो याति जन्मशतान्यपि । ४१७ ॥ २२ अन्तेऽप्यात्ता परिव्रज्या शुभव्रज्या निबन्धनम् । ४८५ ॥ २३ कौमुदी हि निशान्तेऽपि कुमुदामोदकारणम् । ४८५ ॥ द्वितीय सर्गः—१ विद्या हि प्राग्भवाभ्यस्ताः स्वयमायान्ति तादृशाम् । ३४ ॥ २ स्वकार्यमारब्धमपि सन्तोऽन्यार्थे त्यजन्ति हि । ४६ ॥ ३ ...संसर्गः, सद्भिरेव सतां यतः । ५३ ॥ ४ भक्तिमेव हि काङ्क्षन्ति न हि वस्तूनि तादृशाः । ६९ ॥ ५ ....न लङ्घन्ते, पूज्यपूजां विवेकिनः । ९८ ॥ ६ गुणः श्रुतो जनश्रुत्याऽप्यनुरागाय तद्विदाम् । ११६ ॥ ७ अपूर्वस्य दिदृक्षा हि कालक्षेपं क्षमेत न । ११७ ॥ ८ यस्योदयः स वन्द्यो हि यथा हीन्दुर्यथा रविः । २४२ ॥ ९ दुर्वारा भवितव्यता । २८७ ॥ १० विषमल्पमपि प्सातं प्राणनाशाय जायते । ३०८ ॥ ११ महात्मभ्यः प्रदत्तं हि कोटिकोटिगुणं भवेत् । ३४० ॥ १२ स्थानं नैकत्र साधूनां निःसङ्गानां समीरवत् । ३४१ ॥ १३ नाशो नार्जितकर्मणाम् । ४०० ॥ १४ अपत्यस्नेहो बली खलु । ४०१ ॥ १५ महतामनुलग्नैर्हि महदासाद्यते फलम् । ४०४ ॥ १६ किं कम्पते क्वचिच्छैलो दन्तघातेन दन्तिनः ? ।४१९॥ तृतीयः सर्गः—१ न वन्ध्यं दर्शनं सताम् । ३१ ॥ २ ...उपचारः स्याद्, भाविन्यपि भूतवद् । ७२ ॥ ३ कृतज्ञा हि विवेकिनः ॥ १७५ ॥ ४ ...पक्षे सतां जनः । १८७ ॥ चतुर्थः सर्गः—१ सूर्योदय इवान्योपकृत्यै ज्ञानं भवादृशाम् । ११५ ॥ २ दुःस्थितेषु हि महतां वात्सल्यमतिरिच्यते । २३६ ॥ ३ क्षत्रियाणां न धर्मोऽयं शरणार्थी यदर्ग्यते । २५९ ॥ ४ पित्ताग्निः शर्कराशम्यः पयसा किं न शाम्यति ? । २६५ ॥ ५ सर्वेष्वप्यनुकूला हि महान्तः करुणाधनाः । २६९ ॥ ६ सूनोः पुरुषकारो हि हर्षाय प्रथमं पितुः ।२९३ ॥ ७ लोभः कस्य न मृत्यवे ? । २९७ ॥ ८ सत्यो हि पतिवर्त्मगाः । ३३७ । पंचमः सर्गः—१...अर्हत्प्रभावस्यावधिर्न हि । ४८ ॥ २ शोभते समयोचितम् । १०६ ॥ ३ दयावीरा महात्मानः प्रसूतेऽन्य-



। ९५ ॥ ८ एकद्रव्याभिलापो हि महद् वैरस्य कारणम् । १०८ ॥ ९ ...साधूनां, लब्धिभोगोऽपदे न हि । १४१ ॥ १० न्यासवत् प्रतिपन्नस्य नास्ति नाशो महात्मसु ।१४४॥ ११ उपयोगोऽपि लब्धीनां सङ्घकार्ये न दुष्यति । १५९ ॥ १२ स्वामिनो भृत्यदोषेण गृह्णन्त इति नीतिवाक् । १९२ ॥

## सप्तम पर्व प्रथमः सर्गः

१ कन्या ह्यवश्यं दातव्या । २० ॥ २ प्रायो विचारचञ्चूनां कोपः सुप्रशमः खलु । २३ ॥ ३ यथा राजा तथा प्रजाः । ३३ ॥ ४ ...असह्यो हि स्त्रीपराभवः । ४६ ॥ ५ वन्दनीयः सतां साधुर्ह्युपकारी विशेषतः । ४९ ॥ ६ निर्नाथानां कुतः शौर्यं? हतं सैन्यं ह्यनायकम् । ७६ ॥ ७ क्वाऽप्युपायोऽपसर्पणम । ८४ ॥ ८ ...मृत्यवे हि स्याद्, वैरि वैरं चिरादपि । ९५ ॥ ९ नान्यो मन्त्रो हि दोष्मताम् । ११३ ॥ १० बलवानपि किं कुर्यात् प्राप्तः केशरिणा करी ? । १२३ ॥ ११ जयाभिप्रायिणां प्रायः प्राणा हि तृणसन्निभाः । १२८ ॥ द्वितीयः सर्गः—१ तालिका नैकहस्तिकाः । ३६ ॥ २ महतामपराद्धे हि प्रणिपातः प्रतिक्रिया । ६९ ॥ ३ परैश्च भग्नमानस्य मानिनो धिगवस्थितिम् । १२० ॥ ४ स्तोकं विहाय बह्विष्णुर्न हि लज्जाऽऽस्पदं पुमान् । १२१ ॥ आश्रयस्य हि दौर्बल्याद्, आश्रितः परिभूयते । १४३ ॥ ६ महतामागमो ह्याशु क्लेशच्छेदाय कस्य न ? । १४८ ॥ ७ दोष्मतां हि प्रियो युद्धातिथिः खलु । २०५ ॥ ८ युज्यते न वधः प्राणिमात्रस्यापि विवेकिनाम् । पञ्चेन्द्रियाणां हस्त्यादिजीवानां बत का कथा ? ।२१०॥ ९ दोष्मन्तो हि निजैरेव दोर्भिर्विजयकाङ्क्षिणः । २११॥ १० रत्ने हि बहवोऽर्थिनः । २८३ ॥ ११ किमसाध्यं महौजसाम् ? । ३१७ ॥ १२ व्रतं संसारनाशनम् । ३५६ ॥ १३ नात्मीयाः कस्यचिन्नृपाः ।

१२५ ॥ ३ धनं हि सुलभं वत्स ! तज्ञोक्ता दुर्लभः सुतः । १४९ ॥ ४ गीतहार्या मृगा अपि । १८४ ॥ ५ बहुरत्ना हि भूरियम् । २०५ ॥ ६ आस्तामत्र सतां सङ्गः परलोकेऽपि शर्मणे । २३१ ॥ ७ स्त्रीणां प्रकृतिलोलानां परं स्थैर्यं न निश्चयः । २३३ ॥ ८ पुत्री–जामातृविरहः प्रायः कस्य न दुःसहः । २४२ ॥ ९ गतिः साहसिकानां हि समा स्थलजलाध्वनोः । २४३॥ १० मृत्युर्नात्रुटितायुषः । २४८ ॥ ११ एकाऽपि हि हरेच्चित्तं किं पुनः सकलाः कलाः ? । ३०७ ॥ १२ सेवकानां विना सेवां भज्यते खलु जीविका । ३४४ ॥ १३ ...प्रियोदन्ताहरः कस्य न वल्लभः ? । ३५९ ॥ १४ ...यत्र तत्र, पुण्यं ह्यनुचरं नृणाम् । ३७४ ॥ तृतीयः सर्गः—१ वीराणां हि रणं मुदे । ३३ ॥ चतुर्थः सर्गः—१ वृन्दं हि बलवत्तरम् । ३ ॥ २ धीराः सत्त्वाचलन्ति न । १७ ॥ ३ लोलेन्द्रिये यौवने हि यत्तपस्तत्तपो ननु । दारूणास्त्रे रणे यो हि शूरः शूरः स उच्यते । २५ ॥ ४ प्रेम्णो दूरे न किञ्चन । ५९ ॥ ५ कामः कामं निरङ्कुशः । ६० ॥ ६ स्त्रीणां लुब्धो जनः प्रायो दोषं न खलु वीक्षते । ६३ ॥ ७ किं यमस्य दवीयसि ? । ७४ ॥ ८ राज्यं हि विक्रमाधीनं न प्रमाणं क्रमाक्रमौ । ७५ ॥ ९ सदा वैरायमाणा हि शङ्कन्ते परतो मृतिम् । ८४ ॥ १० क्षात्रं तेजो हि दुर्धरम् । ९४ ॥ ११ किं न स्यात् पुण्यसंपदः ? । ९९ ॥ षष्ठः सर्गः—१ सामान्यपुण्यैर्नेह्यर्हन् देवः साक्षान्निरीक्ष्यते ।४४॥ २ केनेश्वरवचोयुक्तियुक्तं बाधितुमीश्यते ? । १३० ॥ सप्तमः सर्गः—१ असाधनीयं पुण्यानां मन्त्रतन्त्रविदां च किम् ? । ५० ॥ २ प्रायेण प्रेयसीप्राप्तिप्रत्याशाऽपि हि शर्मणे । ५७ ॥ ३ न मोघा देशनाऽर्हताम् । १९१ ॥ अष्टमः सर्गः—१ तपोलेशोऽपि नाफलः । ५ ॥ २ पाखण्डिनां हि पाण्डित्यं प्राकृतेष्वेव जृम्भते । २१ ॥ ३ ...स्थानं विदेशो हि, मानिनामपमानिनाम् । ३८ ॥ ४ अभ्यागतेऽन्यनृपतिप्रधाने ह्यर्थिनो नृपाः । ३९ ॥ ५ उपायं वचसा वक्तुं कातरा अपि पण्डिताः । ४४ ॥ ६ छद्मोऽपि क्वापि शोभते । ७५ ॥ ७ ...जीवन्मृता हीनवराः स्त्रियः

दम्पत्योर्न च्छेकाः पार्श्ववर्तिनः । ११० ॥ १२ प्रतारणाप्रकारान् हि बहूञ्जानन्ति पांसुलाः । १२८ ॥ १३ स्वामिवत् स्वाम्यपत्येऽपि सेवकाः समवृत्तयः । १३२ ॥ १४ सन्तः सतां न विपदं विलोकयितुमीश्वराः ? १३३ ॥ १५ अचिन्त्यं चरितं स्त्रीणां ही विपाको विधेरिव । १३८ ॥ १६ ...अञ्जनलेशोऽपि, दूषयत्यंशुकं शुचि । १३९ ॥ १७ अहिदष्टाऽङ्गुलिः किं न च्छिद्यते बुद्धिशालिना ? । १४१ ॥ १८ श्वश्रूदुःखे दुहितॄणां शरणं शरणं पितुः । १४२ ॥ १९ निर्वासयेदपि क्रूरा दोषमुत्पाद्य कञ्चन । १४३ ॥ २० दुःखितानां हि नारीणां माताऽऽश्वासनकारणम् । १५५॥ २१ सर्वथा स्त्री विना नाथं मैकाहमपि जीवतु । १५७ ॥ २२ पुनर्नवीभवेत् प्रायो दुःखमिष्टावलोकनात् । २०२ ॥ २३ अत्युग्रपुण्यपापानामिहैव ह्याप्यते फलम् । २३७ ॥ २४ धिग् धिक् पतिमपण्डितम् । २४७ ॥ २५ पतिव्रताः पतिशोकात् प्रविशन्ति हुताशने । तासां विना हि भर्त्तारं दुःखाय खलु जीवितम् । २६१ ॥ २६ प्रहरेद् बाहुना को हि तीक्ष्णे प्रहरणे सति । २८४ ॥ २७ पौरुषावसरे प्राप्ते न प्रमाणं वयः खलु । २८५ ॥ २८ सर्वत्र बलवच्छलम् । २९७ ॥ २९ ...प्रणिपातान्तः, प्रकोपो हि महात्मनाम् । २९९ ॥ ३० दृष्टसारः स्वयं हीदृग् जामाता दुर्लभः खलु । ३०० ॥ चतुर्थः सर्गः—१ नर्मोक्तिर्न हि सत्यैव प्रायो धवलगीतवत् । १८ ॥ २ सुन्दरं मर्त्यजन्मद्रोः फलं चारित्रलक्षणम् । २२ ॥ ३ कुलधर्मः क्षत्रियाणां स्वसन्धापालनं खलु । २५ ॥ ४ प्राप्तोदयं हि तरणिं तिरोधातुं क ईश्वरः ? । ३६ ॥ ५ लोभाभिभूतमनसां विवेकः स्यात कियच्चिरम् ? । ४३ ॥ ६ किं सिंही हन्ति न द्विपान् ? । ७४ ॥ ७ न ह्यसत् प्राप्यते क्वापि केनाऽप्याकाशपुष्पवत् । ८९ ॥ ८ नहि भीराज्ञया राज्ञामन्यायकरणेऽपि हि । ९५ ॥ ९ आप्ता हि स्फुटभाषिणः । १२९ ॥ १० समयज्ञा हि धीमन्तो न तिष्ठन्ति यथा तथा । १७१ ॥ ११ राज्यं सर्वत्र दोष्मताम् । १७३ ॥ १२ विशेषतः प्रीतये हि राज्ञां भूः स्वयमर्जिता । १७४ ॥ १३ को वा न जीवति

४१४ ॥ १४ सत्या वा यदि वा मिथ्या प्रसिद्धिर्जयिनी नृणाम् । ४१७ ॥ १५ न क्षोभः सत्यभाषिणाम् । ४२६ ॥ १६ अविमृश्य विधातारो भवन्ति विपदां पदम् । ४२८ ॥ १७ ...कृतस्य, करणं नहि विद्यते । ४२९ ॥ १८ पुत्रार्थे क्रियते न किम् ? ४३० ॥ १९ गुरुवद् गुरुपुत्रेऽपि वर्त्तितव्यमिति श्रुतेः । ४३३ ॥ २० प्राणैरप्युपकुर्वन्ति महान्तः किं पुनर्गिरा ? । ४३६ ॥ २१ प्राणात्ययेऽपि शंसन्ति नाऽसत्यं सत्यभाषिणः । ४३७ ॥ २२ अन्यदप्यभिधातव्यं नाऽसत्यं पापभीरुणा । गुरुवागन्यथाकारे कूटसाक्ष्ये च का कथा ? । ४३८ ॥ २३ सत्याद् वर्षति पर्जन्यः सत्यात् सिध्यन्ति देवताः । ४४५ ॥ २४ प्राणा अपि हि दीयन्ते परस्मै न पुनः प्रियाः । ५३६ ॥ २५ न वाङ्मात्रं कलङ्काय विशुद्धमनसां नृणाम् । ५६६ ॥ २६ अर्थिनोऽर्थेषु न तथा दोष्मन्तो विजये यथा । ५७३ ॥ २७ ॥ एकान्तविक्रमः क्वाऽपि विपदेऽपि प्रजायते । ५८२ ॥ २८ बलीयसो बलिभ्योऽपि प्रसूते हि वसुन्धरा । ५८३ ॥ २९ वीरा हि न सहन्तेऽन्यवीराहङ्कारडम्बरम् । ६०५ ॥ ३० ...जिते नाथे, जिता एव पदातयः । ६२० ॥ ३१ तेजस्विनां हि निस्तेजो मृत्युतोऽप्यतिदुःसहम् । ६३२ ॥ ३२ कर्माण्यवश्यं सर्वस्य फलन्त्येव चिरादपि । आपुरन्दरमाकीटं संसारस्थितिरीदृशी । ६४७ ॥ तृतीयः सर्गः—१ वल्लभोत्कण्ठितानां हि घटिकाऽपि दिनायते । २१ स्तोकमप्यमृतं श्रेयो भारोऽपि न विषस्य तु । २८ ॥ ३ सापराधाऽप्यवध्यैव, स्त्री...। ३२ ॥ ४ भृत्योऽपि हि विरक्तः स्यादापदे किं पुनः प्रिया ? । ३५ ॥ ५ किं स्वादुनाऽपि भोज्येन ? रोचते न यदात्मने । ३६ ॥ ६ न युक्तं महतां यत् स्वप्रतिपन्नस्य लङ्घनम् । अनुल्लङ्घ्यैस्तु गुरुभिः प्रतिपन्नस्य का कथा ? । ३८ ॥ ७ विक्रीणते वा मूल्येन ददते वा प्रसादतः । गुरवो हीत्यपि सतां प्रमाणं नापरा गतिः । ३९ ॥ ८ मानिनो ह्यवलेपं न विस्मरन्ति यतस्ततः । ४६ ॥ ९ विद्याधराणां विद्यैव सर्वसिद्धिषु कामधुक् । ७७ ॥ १० स्वदुःखाख्यानपात्रं हि नापरः सुहृदं विना । ८५ ॥ ११ रहःस्थयोर्हि

कामवशम्वदे ? । १७८ ॥ ११ महात्मनां न्यायभाजां कः पक्षं नावलम्बते ? । १७९ ॥ १२ अनागतं हि पश्यन्ति मन्त्रिणो मन्त्रचक्षुषा । १८१ ॥ १३ आदौ प्रेष्यो द्विषां दूत इति नीतिमतां स्थितिः । २१७ ॥ १४ सन्देशहारकेणापि यदि सिध्येत् प्रयोजनम् । पर्याप्तं स्वयमुद्योगकर्मणा भूभुजां तदा । २१९ ॥ १५ छलच्छेकाः खलाः खलु । २९१ ॥ १६ धिगहो ! नीचसौहृदम् । ३०४ ॥ १७ सर्वमस्त्रं बलीयसाम् । ३७१ ॥ १८ कौतुकाद् हि क्षणं दत्ते शक्तो जयमपि द्विषाम् । ३८७ ॥ १९ अङ्गारान् परहस्तेन कर्षयन्ति हि धूर्तकाः । ३९२ ॥ २० सम्भाषोऽपि हि पापाय, परस्त्रीहारिणः...। ३९७ ॥ सप्तमः सर्गः— १ रिपावपि पराभूते महान्तो हि कृपालवः । ९ ॥ २ आप्तेन मन्त्रिणा मन्त्रः शुभोदर्को हि भूभुजाम् । २७ ॥ ३ न मुधा भवति क्वापि प्रणिपातो महात्मसु । ४४ ॥ ४ न ह्रीः पूज्याद् हि बिभ्यताम् । १६४ ॥ ५ पर्यस्ते शकटे हन्त ! किं कुर्वीत गणाधिपः ? । २८३ ॥ ६ राजकार्येऽपि राजान उत्थाप्यन्ते ह्युपायतः । २८६ ॥ ७ नाऽऽप्तस्याऽऽप्ते प्ररोचना । २८७ ॥ अष्टमः सर्गः—१ ....वीरा हि, प्रजासु समदृष्टयः । ४ ॥ २ विवेके हि न रौद्रता । १४८ ॥ ३ नैकत्र मुनयः स्थिराः । २३५ ॥ ४ ....प्रायः, प्रवदाः लोकनिर्मिताः । २६४ ॥ ५ अवश्यमेव भोक्तव्ये कर्माधीने सुखासुखे । २७३ ॥ ६ धर्मः शरणमापदि । २७३ ॥ ७ राजतेजो हि दुस्सहम् । २७८ ॥ ८ युक्ता हि यद् घटामेति श्रद्धेयं तत् मनीषिणा । २८२ ॥ ९ प्रायः प्रेमातिदुस्त्यजम् । २८७ ॥ १० न भक्ताः क्वाप्युपेक्षकाः । २८८ ॥ ११ न रक्तो दोषमीक्षते । २९२ ॥ १२ यथा तथाऽपवादिता यदबद्धमुखो जनः ।३००॥ १३ सर्वलोकविरुद्धं तु त्याज्यमेव यशस्विनः ।३०२ ॥ १४ शङ्कास्थाने हि सर्वोऽपि दिव्यानि लभते जनः ।३२१॥ नवमः सर्गः—१ एकं धर्मं प्रपन्ना हि सर्वे स्युर्बन्धवो मिथः । १३ ॥ २ स्त्रीणां पतिगृहादन्यत् स्थानं भ्रातृनिकेतनम् । १४ ॥ ३ विधुरेषु हि मित्राणि स्मरणीयानि मन्त्रवत् । ५२ ॥ ४ पूज्ये हि विनयोऽर्हति । ९०

सुखं पुरुषोत्तमजन्मनि ? १८९ ॥ १४ हर्षे को नाम तृप्यति ? । १९१ ॥ १५ किं न कुर्यात् स्मरातुरः ? । २१० ॥ १६ व्रते ह्येकाहमात्रेऽपि न स्वर्गादन्यतो गतिः । २१४ ॥ १७ कोपः शाम्यति महतां दीने क्षीणे ह्यरावपि । २३३॥ १८ शोको हर्षश्च संसारे नरमायाति याति च ।२५३॥ १९ सन्तः सतां परित्राणे विलम्बन्ते न जातुचित् ।२७२॥ २० आभरताद् जन्मसिद्धं नन्विक्ष्वाकुषु पौरुषम् ।२७४॥ २१ गुरूणां तादृगाख्यातुं कुलीनाः कथमीशते ? । ३०३ ॥ २२ दीयन्ते कन्यकाः सकृत् । ३१९ ॥ २३ स्वेच्छयैव वराऽऽदानं लोके न हि परेच्छया । ३२९ ॥ २४ ध्वस्ते माने हि दुःखाय जीवितं मरणादपि । ३६० ॥ २५ प्रस्तरोत्कीर्णरेखेव प्रतिज्ञा हि महात्मनाम् ।४२४॥ २६ महतां हि प्रतिज्ञा तु न चलत्यद्रिपादवत् । ४९४ ॥ पञ्चमः सर्गः—१ मायोपायो वलीयसि । १५ ॥ २ खलाः सर्वकपाः खलु । १६ ॥ ३ जातु धर्ममधर्मं वा गणयन्ति न मानिनः ।-३७ ॥ ४ भृत्ये कोपः शिक्षामात्रकृते शिष्ये गुरोरिव । ६३ ॥ ५ मन्त्रिणांना मन्त्रसामर्थ्यात् स्यादलीकेऽपि सत्यता । ९३ ॥ ६ शकुनं चाशकुनं च गणयन्ति हि दुर्बलाः । १०३ ॥ ७ सन्तो हि नतवत्सलाः । २२९ ॥ ८ सामान्योऽप्यतिथिः पूज्यः किं पुनः पुरुषोत्तमः । २५७ ॥ ९ साधर्मिके च वात्सल्यमुक्तं श्रेयस्करं जिनैः । ३७५ ॥ १० कामावेशः कामिनीनां शोकोद्रेकेऽपि कोऽप्यहो ! । ३९८ ॥ ११ महत्सु जायते जातु न वृथा प्रार्थनाऽर्थिनाम् । ४०६ ॥ षष्ठः सर्गः—१ न सिंहस्य सखा युधि । १२ ॥ २ ... विजयो ह्यन्यसाहाय्याद् दोष्मतां ह्रिये । १९ ॥ ३ ...यद्धात्या एव रिपवः स्वतोऽपि परतोऽपि वा । ८८ ॥ ४ सतां सङ्गो हि पुण्यतः । ९७ ॥ ५ क्षुते हि सर्वथा मूढे शरणं तरणिः खलु । १०१ ॥ ६ स्वकार्यादधिको यत्नः परकार्ये महीयसाम् । १०२ ॥ ७ रणाय नालसाः शूरा भोजनाय द्विजा इव । १०८ ॥ ८ न द्वितीया चपेटा हि हरेर्हरिणमारणे । ११४ ॥ ९ ...अहो ! कामाऽवस्था बलीयसी । १४२ ॥ १० किं करोति परं मन्त्रः प्रभौ

तद्वेश्माभिभवायैव योषिताम् । ५६१ ॥ २३ सर्वत्र कुशलं तासां स्त्रीणां याः स्युः पतिव्रताः । ५६७ ॥ २४ सुलभा धनिनां हि भीः । ५७४ ॥ २५ जातस्य हि ध्रुवं मृत्युरकृतार्थस्य मृत्युभीः । ५९८ ॥ २६ अवाप्तक्षीरपाणाय कस्मै रोचते काञ्जिका ? । ६३३ ॥ २७ तपःक्लेशसहानां हि न मोक्षोऽपि दवीयसि । ६७२ ॥ २८ महामयं प्राणभयं सर्वेषामपि देहिनाम् । ६९० ॥ २९ अप्येकाहपरिव्रज्याऽवश्यं स्वर्गापवर्गदा । ६९१ ॥ ३० दैवं दुर्बलघाति हि । ७०५ ॥ ३१ महर्द्धय इवामोघवचना हि पतिव्रताः । ७१३ ॥ ३२ प्रमाणमन्तःकरणं खल्विष्टानिष्टनिर्णये । ७६९ ॥ ३३ कियत् क्षेमं दुरात्मनाम् ? । ८०१ ॥ ३४ नारीणामातुरत्वे हि न दूरे नयनोदकम् । ८२१ ॥ ३५ न कश्चिद् बलवान् विधेः । ८५३ ॥ ३६ इष्टे दृष्टे नवमिव दुखं भवति देहिनाम् । ८७० ॥ ३७ ...जीवन् हि, प्राणी भद्राणि पश्यति । ८७३ ॥ ३८ न ह्यनाख्यातरोगस्य रोगिणोऽपि चिकित्सितम् । ९८९ ॥ ३९ भाग्ये हि विजयो नृणां पाणिपद्मे मरालति । १०५७ ॥ ४० ...स्नेहो हि, याति जन्मशतान्यपि । १०७३ ॥ चतुर्थः सर्गः—१ पिता बाल्ये हि शासिता । १७ ॥ २ मुदे हि स्वो गुणाधिकः । ४० ॥ सप्तमः सर्गः—१ परेषामेव शस्त्राणि स्वकानि स्युर्महात्मनाम् । ४५६ ॥ नवमः सर्गः—१ महतां प्रतिपन्नं हि यावज्जीवमपि स्थिरम् । २१७ ॥ २ धवलैर्गीयते यत्तद् न सर्वं सत्यं...। २२१ ॥ दशमः सर्गः—१ प्रविशन्ति वरं घोरे ज्वलितेऽपि हुताशने । वान्तं भोक्तु न हीच्छन्ति कुले जाता अगन्धने । २८१॥ एकादशमः सर्गः–१ सुप्त–प्रमत्त–भ्रूणर्षि–स्त्रीषु हि प्रहरेत कः ?।६

## नवमपर्व प्रथमः सर्गः

१ अपकारिष्वपि कृपा सतां किं नोपकारिषु ? । ७ ॥ २ स्वर्गाय जायतेऽवश्यमप्येकाहकृतं तपः । १० ॥ ३ जनो हि

॥ ५ पुत्रात् पराजयो वंशोद्द्योतनाय न कस्य हि ? । १५० ॥ ६ दैवस्येव हि दिव्यस्य प्रायेण विषमा गतिः । २०६ ॥ दशमः सर्गः—१ ...कर्मणां विषमा गतिः । ११५ ॥ २ कर्मविपाको दुरतिक्रमः । १२३ ॥ ३ तत्परैः परलोकाय स्थातव्यं मूलतोऽपि हि । १३६ ॥ ४ प्रविशन्ति छिद्रशते नृणां भूतशतानि हि । १४१ ॥

## अष्टम पर्व प्रथमः सर्गः

१ ....को हि, दीपे सत्यग्निमीक्षते ? । ६७ ॥ २ सोऽर्थः स्वभावसंसिद्धो न हि याञ्चामपेक्षते । ८४ ॥ द्वितीयः सर्गः— १ शर्करातोऽपि मधुरा वार्त्ताऽर्धकथिता सती । ४५ ॥ २ सूत्थाना हि नरोत्तमाः । ६८ ॥ ३ ....दूत्ये हि मण्डनं वाग् । १२२ ॥ ४ महिषीचारणं ह्याद्यमाभीराणां कुलव्रतम् । २४७ ॥ ५ स्वयंवरोऽतिप्रौढानामनूढानां हि योषिताम् । ३१६ ॥ ६ .....अतिथीनामुचितं ह्यदः । ३२० ॥ ७ स्वस्थानगमनोत्कण्ठा कस्य न स्याद् बलीयसी । ३७८ ॥ ८ विनाऽऽलोकेन लोको हि जीवन्नपि परासुवत् । ३८३ ॥ ९ न सिंहः सहतेऽन्यं हि गुहाद्वारोपसर्पिणम् । ४२२ ॥ १० निरीहस्य हि किं नृपः ? । ४३१ ॥ ११ ज्येष्ठो भ्राता पिता यथा । ४५८ ॥ १२ सतीनां नास्ति दुष्करम् । ४५९ ॥ १३ प्रमाणं नियतिः खलु । ४७५ ॥ १४ न हि स्थानमनुद्दिश्य प्रवृत्तिश्चेतनावताम् । ४८४ ॥ १५ कुर्यात् पुरुषकारः किं दैवे वक्रत्वमीयुषि ? । ४९९ ॥ १६ दुःखविस्मृतिसख्यसौ । ५०९ ॥ १७ श्वशुरः शरणं येषां नराणां ते नराधमाः । ५१८ ॥ शीलं सतीनां सर्वाङ्गरक्षामन्त्रो हि शाश्वतः । ५२० ॥ १९ दुर्दशापतितानां हि स्त्रीणां धैर्यगुणः कुतः ? । ५५१ ॥ २० न ह्यात्मीया कञ्चुलिका जातु भाराय भोगिनः । ५५२ ॥ २१ .....चिरं, न हि नर्मापि शर्मदम् । ५५३ ॥ २२ पतिं विनाऽपि

## दशम पर्व प्रथमः सर्गः

१ अज्ञानजाद् दुर्विनयान्न कुप्यन्ति महाशयाः । १३३ ॥ द्वितीयः सर्गः—१ प्राज्यं कर्मान्यथा कर्तुं यद्वाऽर्हन्तोऽपि नेशते । ११ ॥ २ गुरूणां किल संसर्गाद् गौरव स्याल्लघोरपि । ६९ ॥ ३ अर्हज्जन्म हि मोक्षाय भवभाजां भवादपि । ९१ ॥ तृतीयः सर्गः—१ पूज्यः सर्वत्र पूज्यते । २१५ ॥ २ परेषामुपकाराय महतां हि प्रवृत्तयः । २७० ॥ ३ वैरं हि ऋणवत् पुंसां जन्मान्तरशतानुगम् । २९८ ॥ ४ स्नेहे :ह्यद्वैतमानिता । ३२६ ॥ ५ सेव्यस्य सेवाऽवसरः पुण्येनैव हि लभ्यते । ६ महान्तः क्व न वत्सलाः ? । ४१२ ॥ ७ शुभध्यानं हि कामधुक् । ४६९ ॥ ८ महान्तो हि न कुप्यन्ति । ४८६ ॥ ९ जन्मसारं हि भोजनम् । ५०६ ॥ १० प्राणात्ययेऽपि जन्तूनां प्रकृतिः खलु दुस्त्यजा ? । ५३६ ॥ चतुर्थः सर्गः—१ सर्वस्यापि हि लोकस्य न प्राणेभ्योऽपरं प्रियम् । ८२ ॥ २ अन्यपुत्रोऽप्यपुत्राणां भवत्यत्यन्तवल्लभः । ८४ ॥ ३ अज्ञा हि पशुवज्जनाः । ९१ ॥ ४ यन्त्रेऽपि बहुशः क्षिप्तं श्वपुच्छमनृजूभवेत् । ११६ ॥ ५ अत्यन्तघृष्टाद् दहनश्चन्दनादपि जायते । ११६ ॥ ७ पुंसां समानशीलानां सद्यो भवति सौहृदम् । १३६ ॥ ७ पुण्याधीनो हि विभवः । ३९६ ॥ ८ मत्याकारे यदेकस्मिन् युगपन्न ह्यसिद्धयम् । ४०० ॥ ९ कार्यगतिर्विषमा च । ४०३ ॥ १० बलीयसाऽवरुद्धानां त्राणं नान्यत् पलायनात् । ५१७ ॥ ११ विपद्यपि हि नार्हन्तः परोपद्रवकारिणः । ६४५ ॥ पञ्चमः सर्गः—१ देशाऽऽचारो हि न ह्रिये । ५४ ॥ २ माया जैत्री त्वमायिषु । ९६ ॥ षष्ठः सर्गः—१ प्रायः पापनिवासानां पापमेवातिथीयते । ३४ ॥ २ अदातुर्हि प्रियाऽऽलापोऽन्यत्र लाभान्तरायकृत् । ३५ ॥ ३ अर्हदाराधनैवैका सर्वकार्येषु कामधुक् । ६० ॥ ४ ......अपुत्रायाः, नान्यद् इष्टमतः परम् । ७५ ॥ ५

जीवितव्यार्थी तन्नास्ति न करोति यत् । २५ ॥ ४ ......भृगुपातेन वपुरेव हि शीर्यते । शीर्यंते नाशुभं कर्म जन्मान्तरशतार्जितम् । ५७ ॥ ५ सम्भोगभूमयोऽपि स्युस्तपसे शान्तचेतसाम् । ६३ ॥ ६ उत्तिष्ठति यतो वह्निस्तत्र विध्यापयेत् सुधीः । ७४ ॥ ७ भवादृशाः समदृशो ह्यपकार्युपकारिषु । ७८ ॥ ८ शरीरं गत्वरमिदं ह्याहारेणापि पोषितम् । किमनेन शरीरेण किं वाऽऽहारेण योगिनाम् । ८४ ॥ ९ अर्च्चान्नार्चति यः सोऽपि पापः किमुत हन्ति यः । ८७ ॥ १० मान्यं हि गुरुशासनम् । ९३ ॥ ११ छलान्वेषी हि मन्मथः । ९६ ॥ १२ ...आधिपत्यं हि, मायोऽन्धङ्करणं नृणाम् । ११८ ॥ १३ दुर्वाराणीन्द्रियाणि हि । १२० ॥ १४ सत्यो हि विरलाः स्त्रियः । १२४ ॥ १५ धीमद्‌भ्यः को न शङ्कते ? । १४८ ॥ १६ कुतो निद्रा महात्मनाम् ? । १६० ॥ १७ तापसा ह्यतिथिप्रियाः । १९५ ॥ १८ अन्यथा चिन्तितं कार्यं दैवं घटयतेऽन्यथा । २३९ ॥ १९ नवीभवन्ति दुःखानि संजाते हीष्टदर्शने । २७१ ॥ २० अज्ञाता अपि पूज्यन्ते महान्तो मूर्त्तिदर्शनात् । ३५८ ॥ २१ बुद्धिः कर्मानुसारिणी । ३८५ ॥ २२ ......धनिनां, सर्वमीषत्करं यतः । ४०० ॥ २३ आपो नार्यश्च नीचगाः । ५२६ ॥ २४ मायिन्यः खलु योषितः । ५४६ ॥ २५ गतयो भिन्नमार्गा हि कर्माधीनाः शरीरिणाम् । ५६७ ॥ २६ नाज्ञा लङ्घ्या विधेः खलु । ५८३ ॥ २७ अशुभं वा शुभं वाऽपि सर्वं हि महतां महत् । ५९६ ॥ द्वितीयः सर्गः—१ कुलीनानां, गुर्वाज्ञा हि बलीयसी । १६८ ॥ २ जैनर्षयो महात्मानो भाषन्ते न मृषा क्वचित् । २५३ ॥ तृतीयः सर्गः—१ फलप्राप्त्यनुसारेण प्रायेण हि मनोरथः । ९० ॥ चतुर्थः सर्गः—१ किं स्वल्पाम्भः संभविनो दुग्धे स्युः पूतराः क्वचित् ? । ११ ॥ २ गिरौ वर्षति पर्जन्यो लक्ष्मीः श्रयति निर्गुणम् । १३ ॥ ३ फलदो ह्युद्यमो नृणाम् । २१ ॥ ४ दुःखितो दुखितानां हि पीडां जानाति मानसीम् । १२७ ॥



## ॥ अथ वीतरागाऽष्टकम् ॥

तुभ्यं नमः समयधर्म्मनिवेदकाय ! तुभ्यं नमस्त्रिभुवनेश्वरशेखराय !
तुभ्यं नमः सुरनरामरसेविताय ! तुभ्यं नमो जिन ! जनार्चितपङ्कजाय ! ॥ १ ॥
तुभ्यं नमो विलसिते हरिचन्दनाय ! तुभ्यं नमो वरकुलाम्बरभास्कराय !
तुभ्यं नमः प्रणतदेवनराधिपाय ! तुभ्यं नमः प्रवररूपमनोहराय ! ॥ २ ॥
तुभ्यं नमो हरिणनायकनायकाय ! तुभ्यं नमो यतिपतिप्रतिपालकाय !
तुभ्यं नमो विकचनीरजलोचनाय ! तुभ्यं नमः स्तनितनादविराजिताय ! ॥ ३ ॥
तुभ्यं नमः कुशलमार्गविधायकाय ! तुभ्यं नमो विकटकष्टनिषेधकाय ! ।
तुभ्यं नमो दुरितरोगचित्सकाय ! तुभ्यं नमस्त्रिजगतो हृदि भूपणाय ! ॥ ४ ॥
तुभ्यं नमो दलितमोहतमोभराय ! तुभ्यं नमः कनकसन्निभभूघनाय ! ।
तुभ्यं नमोऽप्यखिलसद्गुणमन्दिराय ! तुभ्यं नमो मुखकलाधिकचन्द्रिकाय ! ॥ ५ ॥
तुभ्यं नमोऽतिशयराजिविभूपिताय ! तुभ्यं नमः कुमतितापसुभञ्जनाय !
तुभ्यं नमो सुखपयोधिवहित्रकाय ! तुभ्यं नमो विगतकैतवमत्सराय ! ॥ ६ ॥
तुभ्यं नमो विदितभव्यजनाशयाय ! तुभ्यं नमो निखिलसंशयवारकाय !



नान्यथा भवितव्यता । ८० ॥ ६ बलिष्ठा भवितव्यता । ८६ ॥ ७ बुद्धिसाध्येषु कार्येषु कुर्युरूर्जस्विनोऽपि किम् ? । १०१ ॥ ८ .........किं हि, दुःसाध्यं सुधियां धियः ? । १०३ ॥ ९ ........अग्निर्हि, न स्वः कस्यापि विप्रभ्रत् । १०७ ॥ १० पुण्यपुंसां विदेशेऽपि सहचर्यो ननु श्रियः । १२४ ॥ ११ समये मुखरागो हि नृणामाख्याति पौरुषम् । १६१ ॥ १२ धीमद्भिः सुप्रयुक्तस्य किमुपायस्य दुष्करम् ? । १६६ ॥ १३ बन्धुरज्ञायमानोऽपि दृष्टो मोदयते मनः । १६८ ॥ १४ न कन्याप्रार्थनं जातु लज्जायै महतामपि । २२५ ॥ १५ पत्युः क्षेमाऽऽकाङ्क्षिणीनां किं पुत्रेणापरेण वा ? । ३०३ ॥ १६ मायिभिः को न वञ्च्यते । ३२८ ॥ १७ .......कौतुकिनः, सेनाङ्गेषु हि भूभुजः । ३४६ ॥ १८ किमसाध्यं मनुष्याणामभेद्यमिव पाथसाम् ? ।३४७॥ १९ सर्वत्र विभवाः पूज्याः । ३९० ॥ २० नाकाले फलति क्रिया । ४११ ॥ २१ नालं भोग्यफलं कर्माऽभुक्त्वा क्षेप्तुं जिना अपि । ४२२ ॥ सप्तमः सर्गः—१ दासीव वश्या प्रायेण निद्रा ह्यक्षुद्रचेतसाम् । २२ ॥ २ नदीपूर इवासह्यः कोपो हि प्रथमं प्रभोः । ३१ ॥ ३ कालक्षेपाद् यदि पुनः प्रभोः कोपो निवर्तते । ३२ ॥ ४ अधिकाः किङ्करेभ्योऽपि वाग्बद्धा देवयोनयः । ६२ ॥ ५ गुरौ विनयभाजां हि विद्या स्फुरति नान्यथा ।

## अन्तिम मङ्गलम्

प्रशमरसनिमग्नं दृष्टियुग्मं प्रसन्नं, वदनकमलमंकः कामिनीसंगशून्यः ।
करयुगमपि यत्ते शस्त्रसंबन्धवन्ध्यं, तदसि जगति देवो वीतरागस्त्वमेव ॥ २ ॥
जयइ जगजीवजोणी, वियाणओ जगगुरु जगाणंदो, जगनाहो जगबंधू, जयइ जगप्पियामहो भयवं ॥ २ ॥
जयइ सुआणं पभवो, तित्थयराणं अपच्छिमो जयइ, जयइ गुरुलोगाणं, जयइ महप्पा महावीरो ॥३॥ नंदीसूत्रम्

